## ॥ क्रय्यसंस्कृतपुस्तकानि ॥

### ॥ काव्यग्रन्थाः ॥

अच्युतरायाभ्युदयः ...
भर्तृहरिविरचितनीतिशतकम्—आंग्लानुवादसहितम्
भर्तृहरिशतकत्रयम्—मूलम् ...
श्रीकृष्णकर्णामृतम् ...
,, आंग्लानुवादसहितम् ...
मेघसन्देशः—मल्लिनाथीयव्याख्यासमेतः चेन्नपुरीयपच्चयप्पकलाशालोपन्यस्तृभिः जी. जे. सोमयाजुलु महाशयैः विरचितैस्सम्पूर्णपीठिकांग्लानुवादविपुलांग्लटीकाविन्यासैः सहितः ...
मेघदूतम्—मल्लिनाथव्याख्यासहितम् ...
रघुवंशः—मल्लिनाथीयव्याख्यासमेतः ...
रामकर्णामृतम् ...
सुभाषितत्रिशती—भर्तृहरिप्रणीता रामचन्द्ररचितव्याख्यानसहिता ...
सुभाषितनीवी—(मूलमात्रम्) श्रीमद्वेदान्तदेशिकविरचिता श्रीनिवाससूरिकृतव्याख्यानसहिता सांग्लानुवादा प्रतिपदांग्लार्थसहिता च ...

### ॥ गद्यग्रन्थाः ॥

हर्षचरितम्—उच्छ्वासत्रयात्मकम् सव्याख्यम्—चेन्नपुरीयपच्चयप्पकलाशाला संस्कृतोपाध्यायैः वि. अनन्ताचार्यैः विरचितेन प्रतिपदांग्लार्थानुवादेन एम्. ए. एम्. एल्., अड्वकेट्, नारायणार्यैः विरचिताभ्यां भूमिकांग्लानुवादाभ्यां सहितम् ...

॥ श्रीरस्तु ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥





श्रीमच्छङ्करभगवत्पादविरचितं

# ॥ श्रीरामकर्णामृतम् ॥



चेन्नपुर्याम्

वाविल्ल रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितम् .

१९३३

श्रीरामचन्द्रपरब्रह्मणे नमः.

# ॥ श्रीरामकर्णामृतम् ॥

## ॥ मङ्गळश्लोकाः ॥

मङ्गळं भगवान्विष्णुर्मङ्गळं मधुसूदनः ।
मङ्गळं पुण्डरीकाक्षो मङ्गळं गरुडध्वजः ॥ १

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ २

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥ ३

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥ ४

पितृभक्ताय सततं भ्रातृभिस्सह सीतया ।
नन्दिताखिललोकाय रामचन्द्राय मङ्गळम् ॥ ५

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदात्ताय मङ्गळम् ॥ ६

सौमित्रिणा च जानक्या चापबाणासिधारिणा ।
संसेव्याय सदा भक्त्या सानुजायास्तु मङ्गळम् ॥ ७

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम् ॥ ८

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्युक्ताय मङ्गळम् ॥ ९

हनूमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गळम् ॥ १०

श्रीमते रघुवीराय सेतुलङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गळम् ॥ ११

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गळम् ॥ १२

विभीषणकृते प्रीत्या विश्वाभीष्टप्रदायिने ।
जानकीप्राणनाथाय सदा रामाय मङ्गळम् ॥ १३

## ॥ श्रीरामकर्णामृतप्रारम्भः ॥

श्रीरामं त्रिजगद्गुरुं सुरवरं सीतामनोनायकं
श्यामाङ्गं शशिकोटिपूर्णवदनं चंचत्कलाकौस्तुभम् ।
सौम्यं सत्यगुणोत्तमं सुसरयूतीरे वसन्तं प्रभुं
त्रातारं सकलार्थसिद्धिसहितं वन्दे रघूणां पतिम् ॥ १

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुवरान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥

श्रीरामं बलवैरिनीलचिकुरं स्मेराननं श्यामलं
कर्णान्तायतलोचनं सुरवरं कारुण्यपाथोनिधिम् ।
शोणाम्भोरुहपादपल्लवयुगं क्षोणीतनूजायुतं
राजत्कुण्डलगण्डभागयुगळं रामं सदाहं भजे ॥ ३

श्रीरामं जगदेकवीरममलं सीतामनोरञ्जनं
कौसल्यावरनन्दनं रघुपतिं काकुत्स्थवंशोद्भवम् ।
लोकानामभिराममङ्गळघनव्यापारपारायणं
वन्देऽहं जनघोरपापनिकरध्वंसं विभुं राघवम् ॥ ४

श्रीरामं जगदीश्वरं जनकजाजानिं जनानन्दनं
जन्तूनां जनकं जनार्तिहरणं लोकेश्वरं शाश्वतम् ।
आबाल्यादि मुनीश्वरैः परिवृतं जाज्वल्यमानं सदा
जंघालं जमदग्निसूनुहरणं जातानुकंपं भजे ॥ ५

श्रीरामो रघुनायको रघुवरो राजीवनेत्राञ्चितो
राजेन्द्रो रघुपुङ्गवो रघुकुलोत्तंसो रघूणां पतिः ।
रामो राक्षसनाशनोऽमितबलो राकेन्दुपूर्णाननो
राजत्किङ्किणिकङ्कणाङ्कितकरो रामस्सदा पातु नः ॥ ६

श्रीरामचन्द्र करुणाकर राघवेन्द्र राजेन्द्रचन्द्र रघुवंशसमुद्रचन्द्र ।
सुग्रीवनेत्रयुगळोत्पलपूर्णचन्द्र सीतामनःकुमुदचन्द्र नमो नमस्ते ॥ ७

श्रीरामं करुणाकरं गुणनिधिं सीतापतिं शाश्वतं
पारावारगभीरमब्जनयनं प्रावृड्घनश्यामलम् ।
वीरश्रेष्ठमनामयं विजयिनं विश्वप्रकाशात्मकं
घोरारिप्रकराधिजप्रहरणं कोदण्डरामं भजे ॥ ८

श्रीरामचन्द्रेति सलक्ष्मणेति, नीलोत्पलश्यामलकोमलेति ।
आक्रोशयुक्ता त्वधुनैव जिह्वा, सीपापते राघव राघवेति ॥ ९

श्रीरामचन्द्रे रमतां मनो मे रमाङ्गवामे विपदां विरामे ।
जितारिरामे प्रणतारिरामे गुणाभिरामे भुवनैकरामे ॥ १०

श्रीरामचन्द्र रघुपुङ्गव राजवर्य राजेन्द्रराज सुरनायक राघवेश ।
राजाधिराज रघुनंदन रामभद्र दासोऽस्म्यहं च भवतश्शरणागतोऽस्मि।

श्रीरामं सरसीरुहाक्षममलं दूर्वाङ्कुरश्यामलं
विद्युत्कोटिनिभप्रभाम्बरधरं वीरासनाधिष्ठितम् ।
वामाङ्कोपरिसंस्थितां जनकजामालिङ्गय तां बाहुना
तत्त्वज्ञापरपाणिना मुनिगणानाज्ञापयन्तं भजे ॥ १

श्रीरामस्सकलेश्वरो मम पिता माता च सीता मम
भ्राता ब्रह्म सखा प्रभञ्जनसुतः पत्नी विरक्तिः प्रिया ।

विश्वामित्रविभीषणादिवशगा मित्राणि बोधस्सुतो
भक्तिः श्रीहरिसङ्गता रतिसुखं वैकुण्ठमस्मत्पदम् ॥ १३
श्रीरामामलपुण्डरीकनयन श्रीराम सीतापते
गोविंदाच्युत नन्दनन्दन मुकुन्दानन्द दामोदर ।
विष्णो राघव वासुदेव नृहरे देवौघचूडामणे
संसारार्णवकर्णधारक हरे कृष्णाय तुभ्यं नमः ॥ १४
रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणाकरं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजत्कुण्डलमण्डिताननरुचिं रात्रिञ्चरध्वंसिनं
शंपाकोटिसमानकान्तिविलसन्मायामृगघ्नं भजे ॥ १५
रामं रत्नकिरीटकुण्डलधरं केयूरहारान्वितं
सीतालंकृतवामभागमतुलं सिंहासनस्थं प्रभुम् ।
सुग्रीवादिसमस्तवानरवरैस्संसेव्यमानं सदा
विश्वामित्रपराशरादिमुनिभिस्संस्तूयमानं भजे ॥ १६
रामस्सीतासमेतो निवसतु हृदये सानुजं राममीळे
रामेण क्षीणपापस्त्रिविधमपि कृतं कर्म रामाय दद्याम् ।
रामादन्यं न जाने न हि किमपि महारामनाम्नस्समानं
रामे पश्यामि विश्वं भुवनमनुदिनं पाहि मां रामचन्द्र ॥ १७
रामं राजशिखामणिं रघुपतिं देवारिदर्पापहं
लोकानां हितकारिणं गुणनिधिं कारुण्यपुण्योदयम् ।
मुक्ताविद्रुमरत्नशोभिततनुं सौन्दर्यहस्ताम्बुजं
कौसल्यातनयं भजामि सततं श्रीजानकीनायकम् ॥ १८

रामं वीरासनस्थं हृदयगतकरोदञ्चितज्ञानमुद्रं
जानुन्यासक्तहस्तं क्षितिवरतनयाभूषितं वामभागे ।
षट्कोणे व्याहरन्तं पवनसुतयुतं मानसे मानयन्तं
सुग्रीवे सेवमाने दृढशरधनुषा दक्षिणे लक्ष्मणेन ॥ १९

रामं सौमित्रिमित्रं रघुपतिममलं रामचन्द्रं रमेशं
रम्यं श्रीराघवेशं शुभललितमुखं शुद्धसत्त्वं सुवीरम् ।
सीतासौन्दर्यपालं सुरमुनिविनुतं नीरदेंदीवराभं
वन्दे वन्दारुपालं रजनिचरहरं रम्यकोदण्डरामम् ॥ २०

रामं चन्दनशीतलं क्षितिसुतामोहाकरं श्रीकरं
वैदेहीनयनारविन्दमिहिरं सम्पूर्णचन्द्राननम् ।
राजानं करुणासमेतनयनं सीतामनोनन्दनं
सीतादर्पणचारुगण्डललितं वन्दे सदा राघवम् ॥ २१

रामं श्यामाभिरामं रविशशिनयनं कोटिसूर्यप्रकाशं
दिव्यं दिव्यास्त्रपाणिं शरमुखशरधिं चारुकोदण्डहस्तम् ।
कालं कालाग्निरुद्रं रिपुकुलदहनं विघ्नविच्छेददक्षं
भीमं भीमाट्टहासं सकलभयहरं रामचन्द्रं भजेऽहम् ॥ २२

रामचन्द्रचरिताकथामृतं लक्ष्मणाग्रजगुणानुकीर्तनम् ।
राघवेश तव पादसेवनं संभवन्तु मम जन्मजन्मनि ॥ २३

रामो मत्कुलदैवतं सकरुणं रामं भजे सादरं
रामेणाखिलघोरपापनिहती रामाय तस्मै नमः ।
रामान्नास्ति जगत्त्रयैकसुलभो रामस्य दासोऽस्म्यहं
रामे प्रीतिरतीव मे कुलगुरो श्रीराम रक्षस्व माम् ॥ २४

श्रीरामचन्द्र तव कीर्तिसुरद्रुमस्य
तारागणस्सुमनसः फलमिन्दुबिम्बम् ।
मूलं फणाफणिगतं गगनञ्च मध्यं
शाखा दिशो भुवनमण्डलमालवालम् ॥ २५

वैदेहीं मुदितोऽभियातपुलकां गाढं समालिङ्गयन्
वामेन स्तनचूचुकं पुलकितं वामं करेण स्पृशन् ।
तत्त्वं दक्षिणपाणिना कलितया चिन्मुद्रया बोधयन्
रामो मारुतिसेवितः स्मरतु मां साम्राज्यसिंहासने ॥ २६

वामाङ्कस्थितजानकीपरिलसत्कोदण्डदण्डं करे
चक्रं चोर्ध्वकरेण बाहुयुगळे शङ्खं शरं दक्षिणे ।
बिभ्राणं जलजातपत्रनयनं भद्राद्रिमूर्ध्नि स्थितं
केयूरादिविभूषितं रघुपतिं रामं भजे श्यामलम् ॥ २७

वामे भूमिसुता पुरस्तु हनुमान्पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरतश्च पार्श्वदळयोर्वाय्वादिकोणेष्वपि ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ २८

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पकमासने मणिमये वीरासने संस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ २९

वैदेहीं परिरभ्य जातपुलकां लज्जावतीं सुस्मितां
काञ्चीनूपुरहारकङ्कणलसत्कर्णावतंसोज्ज्वलाम् ।

कस्तूरीघनसारचर्चितकुचां चन्द्राननां श्यामलं
कन्दर्पाधिकसुन्दरं रघुपतिं श्रीरामचन्द्रं भजे ॥ ३०
वैदेहीरमणं विभीषणविभुं विष्णुस्वरूपं हरिं
विश्वोत्पत्तिप्रपत्तिपोषणकरं विद्याधरैरर्चितम् ।
वैरिध्वंसकरं विरिञ्चिजनकं विश्वात्मकं व्यापकं
व्यासांगीरसनारदादिविनुतं वन्दामहे राघवम् ॥ ३१
वैदेहस्य पुरे विवाहसमये कल्याणवेद्यन्तरे
सामोदे विमलेन्दुरत्नखचिते पीठे वसन्तौ शुभे ।
शृण्वन्तौ निगमान्ततत्त्वविदुषामाशीर्गिरस्सादरं
पायास्तां सुवधूवरौ रघुपतिः श्रीजानकी चानिशम् ॥ ३२
असितकमलभासा भासयन्तं त्रिलोकं
दशरथकुलदीपं दैवताम्भोजभानुम् ।
दिनकरकुलबालं दिव्यकोदण्डपाणिं
कनकखचितरत्नालङ्कृतं राममीळे ॥ ३३
सुस्निग्धं नीलकेशं स्फुटमधुरमुखं सुन्दरभ्रूललाटं
दीर्घाक्षं चारुनासापुटममलमणिश्रेणिकादन्तपंक्तिम् ।
बिम्बोष्ठं कठिनतरमहोरस्कमाजानुबाहुं
मुष्टिग्राह्यावलग्नं पृथुजघनमुदारोरुजङ्घाङ्घ्रिमीळे ॥ ३४
वन्दामहे महेशानचण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ ३५
जानाति राम तव नामरुचिं महेशो
जानाति गौतमसती चरणप्रभावम् ।

जानाति दोर्बलपराक्रममीशचापो
जानात्यमोघपटुबाणगतिं पयोधिः ॥ ३६

दिव्यस्यन्दनमध्यगं रणरणच्चापान्वितं भीषणं
कालाग्निप्रतिमानबाणकलितं घोरास्त्रतूणीद्वयम् ।
सुग्रीवाङ्गदरावणानुजमरुत्पुत्रादिसंसेवितं
रामं राक्षसवीरकोटिहरणं रक्ताम्बुजाक्षं भजे ॥ ३७

ब्रह्माद्यामरसिद्धजन्मभुवनं यन्नाभिपङ्केरुहं
श्रीनिर्वाणनिकेतनं यदुदरं लोकैकशय्यागृहम् ।
यद्वक्षः कमलाविलासभवनं यन्नाममन्त्रं सतां
वासागारमखण्डमङ्गळनिधिः पायात्स वो राघवः ॥ ३८

शृङ्गारं क्षितिनन्दनीविहरणे वीरं धनुर्भञ्जने
कारुण्यं बलिभोजनेऽद्भुतरसं सिन्धौ गिरिस्थापने ।
हास्यं शूर्पणखामुखे भयवहे बीभत्समन्यामुखे
रौद्रं रावणमर्दने मुनिजने शान्तं वपुः पातु नः ॥ ३९

माता रामो मत्पिता रामचन्द्रो भ्राता रामो मत्सखा राघवेशः ।
सर्वस्वं मे रामचन्द्रो दयालुर्नान्यं दैवं नैव जाने न जाने ॥ ४०

मूले कल्पद्रुमस्याखिलमणिविलसद्रत्नसिंहासनस्थं
कोदण्डेनाशुगेनोल्लसितकरयुगेनार्चितं लक्ष्मणेन ।
वामांकन्यस्तसीतं भरतभृतमहामौक्तिकच्छत्रकान्ति
शत्रुघ्न चामराभ्यां सुविलसितकरे रामचन्द्रं भजेऽहम् ॥ ४१

वामे कोदण्डदण्डं निजकरकमले दक्षिणे बाणमेकम्
पश्चाद्भागे च नित्यं दधतमभिमतं साचितूणीरभारम् ।

वामेऽवामे लसद्भ्यां सहमिलिततनुं जानकीलक्ष्मणाभ्यां
रामं श्यामं भजेऽहं प्रणतजनमनःखेदविच्छेददक्षम् ॥ ४२
अम्बोधरश्यामलमम्बुजाक्षं धनुर्धरं वीरजटाकलापम् ।
पार्श्वद्वये लक्ष्मणमैथिलीभ्यां निषेव्यमाणं प्रणमामि रामम् ॥ ४३
कोदण्डदीक्षागुरुमप्रमेयं सलक्ष्मणं दाशरथिं दयालुम् ।
आजानुबाहुं जगदेकवीरमनाथनाथं रघुनाथमीडे ॥ ४४
कर्पूराङ्गविलेपनं रघुवरं राजीवनेत्रं प्रभुं
कस्तूरीनिकराकृतिं खरधृतिप्रध्वंसिनं श्रीहरिम् ।
कन्दर्पायुतकोटिसुन्दरतनुं कामारिसेव्यं गुरुं
कान्ताकामदमप्रमेयममलं सीतासमेतं भजे ॥ ४५
नीलाब्दबृन्दसदृशं परिपूर्णदेहं दिक्पालकादिसुरसेवितपादपद्मम् ।
पीताम्बरं कनककुण्डलशोभिताङ्गं सीतापतिं रघुपतिं सततं भजामि ॥
भर्गब्रह्मसुरेन्द्रमुख्यदिविजप्राञ्चत्किरीटाग्रसं-
सर्गानेकमणिप्रभाकरसहस्राभं पदाम्भोरुहे ।
दुर्गासन्ततसंस्तुताङ्घ्रिकमलं दुर्वारकोदण्डिनं
गङ्गाविस्फुटमौलिमानसहरं कल्याणरामं भजे ॥ ४७
अग्रे प्राञ्जलिमाञ्जनेयमनिशं वीरञ्च तारासुतं
पार्श्वे पंक्तिमुखानुजं परिसरे सुग्रीवमग्रासने ।
पश्चाल्लक्ष्मणमन्तिके जनकजां मध्ये स्थितं राघवं
चिन्तातूलिकया लिखन्ति सुधियश्चित्तेषु पीताम्बरम् ॥ ४८
क्षीराम्भोनिधिमध्यवर्तिनि सिते द्वीपे सुवर्णाचले
रत्नोल्लासितकल्पभूरुहतले जाम्बूनदे मण्डपे ।

तेजोभ्राजितवेदिके सुरुचिरे माणिक्यसिंहासने
हेमाम्भोरुहकर्णिकापरितले वीरासनस्थं भजे ॥ ४९

दोर्दण्डने च मण्डलीकृतमहाकोदण्डचण्डाशुगै-
र्निर्घातै रविकोटितुल्यनिशितैर्ब्रह्मादिमुख्यस्तुतैः ।
सुग्रीवादिसमस्तवानरवरानाज्ञापयन्तं गिरा
दैत्यान् ताडय ताडयेत्यनुपदं श्रीरामचन्द्रं भजे ॥ ५०

भूकम्पं जनयन्नभो विदळयन्नम्भोनिधिं क्षोभयन्
दैतेयांश्च विमर्दयन् गिरिवरान् भिन्दन् दिशः पूरयन् ।
वैदेहीमतिमोदयन् सकलगीर्वाणान् शिरःकम्पयन्
कल्याणो रघुरामबाणविलसत्कोदण्डचण्डध्वनिः ॥ ५१

विमलकमलनेत्रं विस्फुरन्नीलगात्रं तपनकुलपवित्रं दानवध्वांतमित्रं ।
भुवनशुभचरित्रं भूमिपुत्रीकळत्रं दशरथवरपुत्रं नौमि रामाख्यमित्रम् ॥

जननी जानकी साक्षाज्जनको रघुनन्दनः ।
लक्ष्मणो मित्रमस्माकं को विचारः कुतो भयम् ॥ ५३

जनको रामचन्द्रो मे जननी जनकात्मजा ।
हनुमत्प्रमुखास्सर्वे हरयो मम बान्धवाः ॥ ५४

जगति विशदमन्त्रं जानकीप्राणमन्त्रं
विबुधविनुतमन्त्रं विश्वविख्यातमन्त्रम् ।
दशरथसुतमन्त्रं दैत्यसंहारमन्त्रं
रघुपतिनिजमन्त्रं रामरामेति मन्त्रम् ॥ ५५

सीताया दक्षिणे पार्श्वे लक्ष्मणस्य च पार्श्वतः ।
तन्मध्ये राघवं वन्दे धनुर्बाणधरं हरिम् ॥ ५६

चान्द्रोपमं मलयचन्दनचर्चिताङ्गं मन्दारपुष्पपरिपूजितपादपद्मम् ।
ब्रह्मेन्द्रवन्द्यमनिशं मुनिबृन्दसेव्यं वन्देऽरविन्दनयनं रघुरामचन्द्रम् ॥
इक्ष्वाकुनन्दनं सुग्रीवपूजितं त्रैलोक्यरक्षकं सत्यसन्धं सदा ।
राघवं रघुपतिं राजीवलोचनं रामचन्द्रं भजे राघवेशं भजे ॥ ५८
ब्रह्मामृतानन्दफलप्रदायिनं वेदान्तविज्ञानसुगन्धपुष्पितम् ।
सीताशुभाङ्गाश्रितबाहुशाखिनं श्रीरामकल्पद्रुममाश्रयामः ॥ ५९
कनकनिकषभासा सीतयाऽलिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णाभिरामः ।
अभिनवयुतविद्युन्नन्दितो मेघखण्ड-
श्शमयतु मम तापं सर्वदा रामचन्द्रः ॥ ६०
अलं शास्त्राभ्यासैरलमसकृदाम्नायपठनै-
रलं तीर्थस्नानैरलमखिलयागव्रतजपैः ।
अलं योगाभ्यासैरलमपि महापातकभिया
यदस्माकं रामस्मरणमहिमा सा विजयते ॥ ६१
सीतामनोमानसराजहंस संसारसन्तापहर क्षमावन् ।
श्रीराम दैत्यान्तक शान्तरूप श्रीतारकब्रह्म नमो नमस्ते ॥ ६२
कदा वा साकेते विमलसरयूतीरपुलिने
समासीनश्श्रीमद्रघुपतिपदाब्जे हृदि भजन् ।
अये रामस्वामिन् जनकतनयावल्लभ विभो
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ६३
कदा वा साकेते तरुणतुलसीकाननतले
निविष्टस्ते पश्यन्नविहतविशालोर्ध्वतिलकम् ।

अये सीतानाथ स्मृतजनपते दानवजयिन्
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवासान्॥ ६४
कदा वा साकेते मणिखचितसिंहासनतले
समासीनं रामं जनकतनयालिङ्गिततनुम् ।
अये सीताराम त्रुटितहरधन्वन् रघुपते
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ६५
मार्गेमार्गे शाखिनां रत्नवेदी वेद्यांवेद्यां किन्नरीबृन्दगीतम् ।
गीतेगीते मञ्जुळालापगोष्ठी गोष्ठ्यांगोष्ठ्यां त्वत्कथा रामचन्द्र ॥
वृक्षेवृक्षे वीक्षिताः पक्षिसङ्घाः सङ्घेसङ्घे मञ्जुलामोदवाक्यम् ।
वाक्येवाक्ये मञ्जुलालापगोष्ठी गोष्ठ्यांगोष्ठ्यां त्वत्कथा रामचन्द्र ॥
श्वेतपुष्पकमारुह्य सीतया सह राघव ।
सुग्रीवादिभवद्भक्तैर्मनोमध्ये रमस्व मे ॥ ६८
दोर्भिः खड्गं त्रिशूलं डमरुमसिधनुश्चारुबाणं कुठारं
शङ्खञ्चक्रञ्च खेटं हलमुसलगदाभिंडिवालञ्च पाशं ।
विद्युद्वर्हींश्च मुष्टिं त्वभयवरकरं बिभ्रतं शुभ्रवर्णं
वन्दे रामं त्रिनेत्रं सकलरिपुकुलं मर्दयन्तं प्रतापैः ॥ ६९
दुरिततिमिरचन्द्रो दुष्टकञ्जातचन्द्रः
सुरकुवलयचन्द्रस्सूर्यवंशाब्धिचन्द्रः ।
स्वजननिवहचन्द्रश्शत्रुराजीवचन्द्रः
प्रणतकुमुदचन्द्रः पातु मां रामचन्द्रः ॥ ७०
कल्याणदं कौशिकयज्ञपालं कलानिधिं काञ्चनशैलधीरम् ।
कञ्जातनेत्रं करुणासमुद्रं काकुत्स्थरामं कलयामि चित्ते ॥ ७१

वाल्मीकिस्मृतिमन्दरेण मथितस्सीतारमासम्भव-
स्सुग्रीवाङ्गदजाम्बवादिपतगस्सौमित्रिचन्द्रोदयः ।
वातोत्पन्नमणिर्विभीषणसुधः पौलस्त्यहालाहल-
श्श्रीरामायणदुग्धवार्धिरमलो भूयात् सुखश्रेयसे ॥ ७२

रघुनन्दन एव दैवतं नो रघुवंशोद्भव एव दैवतं नः ।
भरताग्रज एव दैवतं नो भगवान् राघव एव दैवतं नः ॥ ७३

उत्फुल्लानलकोमलोत्पलदलश्यामाय रामामन-
श्चन्द्राय प्रशमाय निर्मलगुणारामाय रामात्मने ।
ध्यानारूढमुनीन्द्रमानससरोहंसाय संसारवि-
ध्वंसायाद्भुततेजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ७४

राजीवायतलोचनं रघुवरं नीलोत्पलश्यामलं
मन्दाराञ्चितमण्डपे सुललिते सौवर्णके पुष्पके ।
आस्थाने नवरत्नराजिखचिते सिंहासने संस्थितं
सीतालक्ष्मणलोकपालसहितं वन्दे मुनीन्द्रास्पदम् ॥ ७५

वल्लीप्रवालनवपल्लवपादपद्मं कञ्जेक्षणं जलदनीलसरोरुहाभम् ।
सीमन्तिनीनयनमोहनमूलमन्त्रं रामं नमामि मुनिमानसराजहंसम् ॥

अलं विवादेन न मानुषोऽयं रामात्मना राक्षसमर्दनाय ।
भुजङ्गशय्यां परिमुच्य साक्षान्नारायणो भूतलमाजगाम ॥ ७७

लोकत्राणानुकारी दशवदनशिरःपंक्तिविच्छेदकारी
लङ्कालङ्कारहारी भृगुतनयमनस्सर्वगर्वापहारी ।
सीतासीमन्तकारी मणिमयमकुटो दिव्यकोदण्डधारी
श्रीरामः पापहारी शमयतु दुरितं भूमिभारापहारी ॥ ७८

ब्रह्मादियोगिमुनिपूजितसिद्धमन्त्रं दारिद्र्यदुःखभवरोगविनाशमन्त्रम् ।
संसारसागरसमुत्तरणैकमन्त्रं वन्दे महाभयहरं रघुराममन्त्रम् ॥

शत्रुच्छेदैकमन्त्रं सरसमुपनिषद्वाक्यसम्पूज्यमन्त्रं
संसारोत्तारमन्त्रं समुचितसमये सङ्गनिर्याणमन्त्रम् ।
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं
जिह्वे श्रीराममन्त्रं जप जप सफलं जन्मसाफल्यमन्त्रम् ॥ ८०

आकर्णमारूढधनुर्गुणाढ्यं ब्रह्मास्त्रमुण्डीकृतराक्षसेन्द्रम् ।
रथाधिरूढं रणरङ्गधीरं रामं भजे रक्तसरोरुहाक्षम् ॥ ८१

एतौ तौ दशकण्ठकण्ठकदळीकान्तारकान्तिच्छिदौ
वैदेहीकुचकुम्भकुङ्कुमलसत्पङ्कारुणालङ्कृतौ ।
विश्वत्राणनिदानसाधुसवनप्रारम्भयूपौ भुजौ
देयास्तामुरुविक्रमौ रघुपते श्रेयांसि भूयांसि नः ॥ ८२

वामाङ्कोपरिसंस्थितावनिसुतामामुक्तभूषोज्ज्वलां
पश्यन्तं परिपूर्णचन्द्रवदनं भ्राजत्किरीटोज्ज्वलम् ।
आसीनं नवरत्नराजिखचिते सिंहासने राघवं
सुग्रीवाङ्गदलक्ष्मणानिलसुतैरासेव्यमानं भजे ॥ ८३

जानक्याः कमलामलाञ्जलिपुटे याः पद्मरागायिता
न्यस्ता राघवमस्तके तु विलसत्कुन्दप्रसूनायिताः ।
स्रस्ता श्यामलकायकान्तिकलिता या इन्द्रनीलायिताः
मुक्तास्ताश्शुभदा भवन्तु भवतां श्रीरामवैवाहिकाः ॥ ८४

नित्यं श्रीराममन्त्रं निरुपममधिकं नीतिसुज्ञानमन्त्रं
सत्यं श्रीराममन्त्रं सदमलहृदये सर्वदारोग्यमन्त्रम् ।

स्तुत्यं श्रीराममन्त्रं सुललितसुमनस्सौख्यसौभाग्यमन्त्रं
पठ्यं श्रीराममन्त्रं पवनजवरदं पातु मां राममन्त्रम् ॥ ८५
व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं
दैत्योन्मूलकरौषधं भवभयप्रध्वंसनैकौषधम् ।
भक्तानन्दकरौषधं त्रिभुवने सञ्जीवनैकौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीरामनामौषधम् ॥ ८६
ध्याये प्रातस्सुरेशं रविकुलतिलकं रञ्जितानन्तलोकं
बालं बालारुणाक्षं भवमुखविनुतं भावगम्यं भवघ्नम् ।
दीव्यन्तं स्वर्णक्लृप्तैर्मणिगणनिकरैर्भूषणैरुज्ज्वलाङ्गं
कौसल्यादेहजातं मम हृदयगतं राममीषत्स्मितास्यम् ॥ ८७
मध्याह्ने रामचन्द्रं मणिगणललितं मन्दहासावलोकं
मार्ताण्डानेकभासं मरकतनिकराकारमानन्दमूर्तिम् ।
सीतावामाङ्कसंस्थं सरसिजनयनं पीतवासो वसानं
वन्देऽहं वासुदेवं वरशरधनुषं मानसे मे विभान्तम् ॥ ८८
ध्याये रामं सुधांशुं नतसकलभवारण्यतापप्रहारं
श्यामं शान्तं सुरेन्द्रं सुरमुनिविनुतं कोटिसूर्यप्रकाशम् ।
सीतासौमित्रिसेव्यं सुरनरसुगमं दिव्यसिंहासनस्थं
सायाह्ने रामचन्द्रं स्मितरुचिरमुखं सर्वदा मे प्रसन्नम् ॥ ८९
केयूराङ्गदकङ्कणैर्मणिगणैर्वैरोचमानं सदा
राकापर्वणिचन्द्रकोटिसदृशं छत्रेण वैराजितम् ।
हेमस्तम्भसहस्रषोडशयुते मध्ये महामण्डपे
देवेशं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ९०

20602



विहाय कोदण्डमिमं मुहूर्तं गृहाण पाणौ मणिचारुवेणुं ।
मायूरबर्हञ्च निजोत्तमाङ्गे सीतापते राघव रामचन्द्र ॥ ९१
शुद्धान्ते मातृमध्ये दशरथपुरतः सञ्चरन्तं परं तं
काञ्चीदामानुविद्धप्रतिमणिविलसत्किङ्किणीनिक्कणाङ्गम् ।
फाले मुक्ताललामं पदयुगनिनद न्नूपुरं चारुहासं
बालं रामं भजेऽहं प्रणतजनमनःखेदविच्छेददक्षम् ॥ ९२
सम्पूर्णचन्द्रवदनं सरसीरुहाक्षमाणिक्यकुण्डलधरं मकुटाभिरामं ।
चांपेयगौरवसनं शरचापहस्तं श्रीरामचन्द्रमनिशं मनसा स्मरामि ॥
इन्द्रनीलमणिसन्निभदेहं वन्दनीयमसकृन्मुनिबृन्दैः ।
लम्बमानतुलसीवनमालं चिन्तयामि सततं रघुवीरम् ॥ ९४
रामचन्द्र दयासान्द्र रघुवीर नृपोत्तम ।
लोचनाभ्यां कृपापूरपूर्णाभ्यां मां विलोकय ॥ ९५
रामेति वर्णद्वयमादरेण सदा स्मरन् मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानुषणामन्यत्र धर्मे खलु नाधिकारः ॥ ९६
भक्तप्रियं भक्तसमाधिगम्यं चिंताहरं चिंतितकामधेनुं ।
सूर्येन्दुकोटिद्युतिभास्वरं तं रामं भजे राघवरामचन्द्रम् ॥ ९७
सकलभुवनरत्नं सर्वशास्त्रार्थरत्नं समरविजयरत्नं सच्चिदानन्दरत्नं ।
दशमुखहररत्नं दानवारातिरत्नं रघुकुलनृपरत्नं पातु मां रामरत्नम् ॥
मातुः पार्श्वे चरन्तं मणिमयशयने मञ्जुभूषांचिताङ्गं
मन्दंमन्दं पिबन्तं मुकुळितनयनं स्तन्यमन्यस्तनाग्रम् ।
अङ्गुळ्यग्रैः स्पृशन्तं सुखपरवशया सस्मितालिङ्गिताङ्गं
गाढं गाढं जनन्या कलयतु हृदयं मामकं रामबालम् ॥ ९९

रामाभिरामं नयनाभिरामं वाचाभिरामं वदनाभिरामं ।
सर्वाभिरामं च सदाभिरामं वन्दे सदा दाशरथिं च रामम् ॥ १००

जय जय रघुराम श्रीमुखांभोजभानो
जय जय रघुवीर श्रीमदंभोजनेत्र ।
जय जय रघुनाथ श्रीकराभ्यर्चिताङ्घ्रे
जय जय रघुवर्य श्रीश कारुण्यसिंधो ॥ १०१

जय जय वरशङ्खश्रीगदाचक्रधारिन्
जय जय निजदासप्रार्थितार्थप्रदायिन् ।
त्रिभुवनमयसर्वप्राणिभावज्ञ विष्णो
शरणमुपगतोऽहं त्वां शरण्यं वरेण्यम् ॥ १०२

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥ १०३

श्रीरामेत्येकदा वक्तुं मनो यस्य प्रवर्तते ।
वैकुण्ठवासिनस्तस्य कुलमेकोत्तरं शतम् ॥ १०४

राशब्दोच्चारमात्रेण मुखान्निर्यांति पातकाः ।
पुनः प्रवेशभीत्या च मकारस्तु कवाटवत् ॥ १०५

श्रीरामायणमादिकाव्यमृषिणा वाल्मीकिना निर्मितं
वेदान्तार्थविशारदैरनुदिनं स्तुत्यं सुरैरर्चितम् ।
श्रोतॄणामघनाशनं सुरतरोस्तुल्यं तु मुक्तिप्रदं
ये शृण्वंति पठंति रामचरितं ते यांति विष्णोः पदम् ॥ १०६

श्रीरामकर्णामृते

प्रथमाश्वासः

समाप्तः

श्रीरामचन्द्रपरब्रह्मणे नमः.

# ॥ श्रीरामकर्णामृतम् ॥



## ॥ द्वितीयाश्वासः ॥

श्रीरामं जनकक्षितीश्वरसुतावक्त्राम्बुजाहारिणं
श्रीमद्भानुकुलाब्धिकौस्तुभमणिं श्रीरत्नवक्षस्स्थलम् ।
श्रीकण्ठाद्यमरौघरत्नमकुटालङ्कारपादाम्बुजं
श्रीवत्सोज्ज्वलमिन्द्रनीलसदृशं श्रीरामचन्द्रं भजे ॥ १

श्रीरङ्गेशपदाब्जलग्नहृदयं श्रीशङ्खचक्रान्वितं
श्रीमन्निर्जरपादपस्फुटपदं श्रीसिंहपीठस्थितम् ।
श्रीवैकुण्ठसहस्रमस्तकलसद्भोगासने शायिनं
श्रीभूमीसुतया युतं श्रितनिधिं श्रीराममूर्तिं भजे ॥ २

आनन्दनन्दमरुणाधरमम्बुजाक्ष-
मापीतवस्त्रमतसीकुसुमोज्ज्वलाङ्गम् ।
अक्षांतवर्णमकलङ्कममेयमाद्य-
मत्याकृतिं रघुपतिं शरणागतोऽस्मि ॥ ३

साकेते नवरत्नपंक्तिखचिते चित्रध्वजालङ्कृते
वासे स्वर्णमये दळाष्टललिते पद्मे विमानोत्तमे ।
आसीनं भरतादिसोदरजनैः शाखामृगैः किन्नरैः
दिक्पालैर्मुनिपुङ्गवैर्नृपगणैस्संसेव्यमानं भजे ॥ ४

कन्दर्पायुतकोटिकोटितुलितं कालाम्बुदश्यामलं
कम्बुग्रीवमुदारकौस्तुभधरं कर्णावतंसोत्पलम् ।
कस्तूरीतिलकोज्ज्वलं स्मितमुखं चिन्मुद्रयालङ्कृतं
सीतालक्ष्मणवायुपुत्रसहितं सिंहासनस्थं भजे ॥ ५

वराभयं दिव्यरथाङ्गशङ्खं सकौस्तुभं वेष्टितपीतवस्त्रम् ।
किरीटहाराङ्गदकुण्डलाङ्गं श्रीवत्सचिह्नं शिरसा नमामि ॥ ६

दिगम्बरं किङ्किणिमेखलोज्ज्वलं ललाटपर्यंतविलम्बितालकम् ।
कलद्वचस्कं कमनीयनूपुरद्वयं शिशुं राममहं नमामि ॥ ७

मन्दारमूले मणिपीठसंस्थं सुधाप्लुतं दिव्यविराट्स्वरूपम् ।
सबिन्दुनादान्तकलांततुर्यमूर्तिं भजे हं रघुवंशरत्नम् ॥ ८

अनर्घमाणिक्यविराजमानश्रीपादुकालङ्कृतशोभनाभ्याम् ।
अशेषबृन्दारकवन्दिताभ्यां नमो नमो रामपदाम्बुजाभ्याम् ॥ ९

ध्वजाम्बुजच्छत्ररथाङ्गशङ्खदम्भोळिपाशाङ्कुशमत्स्यचिह्नं ।
ब्रह्मेंद्रदेवादिकिरीटकोटिसङ्घर्षपादाम्बुजयुग्ममीळे ॥ १०

ललाटदेशोज्ज्वलबालभूषणं सताण्डवं व्याघ्रनखाङ्ककन्धरम् ।
दिगम्बरं शोभितबर्बरालकं श्रीबालरामं शिरसा नमामि ॥ ११

शताष्टदिव्यस्थलमूर्तिवन्दितं शतक्रतुब्रह्मनरुद्रणार्चितम् ।
शशाङ्कवैश्वानरभानुमण्डलस्थितं भजेऽहं रघुवंशवर्धनम् ॥ १२

कर्णांतविश्रांतधनुर्गुणाङ्ककलम्बलक्षीकृतराक्षसेश्वरम् ।
घृद्धश्रवःस्यन्दनमध्यसंस्थं रूक्षेक्षणं राममहं नमामि ॥ १३

सुत्रामनीलोत्पलनीलमेघ श्रीनिर्जिताङ्गं सुतया धरण्याः ।
युक्तं सुरेन्द्रावनमानसं तं रामं भजे राक्षसवंशनाशनम् ॥ १४

राकाचन्द्रनिभाननं रतिपतिद्वेषिप्रियं राक्षसा-
धीशग्रीवविभेदनस्फुटपटुप्रख्यातबाणोज्ज्वलम् ।
रत्नालङ्कृतपादुकांचितपदाम्भोजं रमावल्लभं
रागद्वेषविहीनचित्तसुलभं रामं भजे तारकम् ॥ १५
आलोलस्फुटरत्नकुण्डलधरं आविस्मितालङ्कृतं
आधारादिकचक्रमण्डलगतं आनन्दकन्दांकुरम् ।
आविर्भूतकृपान्तरङ्गजलधिं आक्षान्तवर्णाश्रयं
आपन्नार्तिनिदाघमेघसमयं रामं भजे तारकम् ॥ १६
साकेतान्तरतारमण्डपमहामाणिक्यसिंहासने
तन्मध्येऽष्टदळाम्बुजे स्फुटतरे चित्कर्णिके संस्थितम् ।
सौमित्राम्बुजमित्रसूनुभरतश्रीवायुपुत्रैर्वृतं
मुद्रालङ्कृतपाणिसारसमजं रामं भजे तारकम् ॥ १७
विराजमानोज्ज्वलपीतवाससं विशालवक्षस्स्थलकौस्तुभश्रियम् ।
भजे किरीटाङ्गदरत्नकुण्डलं नमस्तुलस्या वनमालयाङ्कितम् ॥ १८
मूलादिषट्सरसिजान्तसहस्रपद्मपत्रान्तराळनिलयं भवबन्धनाशम् ।
नादान्तचन्द्रगळितामृतसिक्तरूपं नादान्तनादमहिमास्पदराममीळे ॥
वन्दे वरप्रदमहावरदानगर्वलङ्काधिनाथकुलपर्वतनाशवज्रम् ।
तं रावणानुजमरुत्सुतभानुसूनुदिक्पालसोदरगणैः परिसेव्यमानम् ॥
अज्ञानगाढतिमिरापहभानुमूर्तिमारक्तचारुनयनाम्बुजमादिबीजम् ।
अम्भोधिमध्यवटपत्रशयानमादिमध्यांतशून्यमखिलास्पदरामचंद्रम् ॥
सुधासमुद्रान्तविराजमानद्वीपे सिते चन्दनपारिजाते ।
महासने पन्नगतल्पमध्ये निषण्णमीळे रघुवंशरत्नम् ॥ २२

स्मितानन्नं पद्मदळायतेक्षणं विनीलमाणिक्यजिताङ्गशोभितम् ।
जटाकिरीटं शरचापलांछनं नमाम्यहं भानुकुलाब्धिकौस्तुभम् ॥

प्रसूनबाणाङ्कितमिक्षुचापं चक्राब्जपाशांकुशवंशनाळम् ।
करैर्दधानं घननीलवर्णं श्रीकृष्णरूपं प्रणमामि रामम् ॥ २४

बहूरुपादोदरवक्त्रलोचनं दीप्तप्रचण्डानलदुर्निरीक्षम् ।
अशेषबृन्दारकनागगोचरं भजामि ते राघव विश्वरूपम् ॥ २५

सहस्रनेत्राननपादबाहुमनन्तवीर्यं रविकोटितुल्यम् ।
स्रक्चन्दनालङ्कृतदिव्यदेहं भजाम्यहं ते हृदि विश्वरूपम् ॥ २६

कळम्बकोदण्डगदाब्जसंयुतं दंष्ट्राकराळाङ्कधनञ्जयाननम् ।
पीतांशुकस्वर्णकिरीटकुण्डलं भजामि ते राघव विश्वरूपम् ॥ २७

कोदण्डमिक्षुजनितं स्मरपञ्चबाणं शङ्खं रथावयवमङ्कुशपाशवेणुम् ।
हस्तैर्दधानममलद्युतिमुद्वहन्तं प्रद्युम्न कृष्णमनिशं भज रामचन्द्रम् ॥

सीतालोकनतत्परं मणिनिभं व्याख्यानमुद्राञ्चितं
वामे जानुविलम्बहस्तमनिशं वीरासने संस्थितम् ।
मूले कल्पतरोरनादिमुनिभिः ब्रह्मादिभिस्सेवितं
मुक्ताहारकिरीटकुण्डलधरं मूर्धाभिषिक्तं भजे ॥ २९

यद्रूपमानन्दकरं मुनीनां यद्बाण आखण्डलशत्रुनाशनम् ।
यद्दैवतं सर्वजनान्तरस्थं तत्सर्वरूपं रघुनाथमीळे ॥ ३०

नादं नादविनीलचित्तपवनं नादान्ततत्त्वप्रियं
नामाकारविवर्जितं नवघनश्यामाङ्गनादप्रियम् ।
नादाम्भोजमरन्दमत्तविलसद्भृङ्गं मदन्तस्स्थितं
नादान्तध्रुवमण्डलाब्जरुचिरं रामं भजे तारकम् ॥ ३१

नानाभूतहृदब्जपद्मनिलयं नामोज्ज्वलाभूषणं
नामस्तोत्रपवित्रितत्रिभुवनं नारायणाष्टाक्षरम् ।
नादांतेंदुगळत्सुधाप्लुततनुं नानात्मचिन्मात्रकं
नानाकोटियुगांतभानुसदृशं रामं भजे तारकम् ॥ ३२

खश्यामं खगवाहनं खररिपुं खाद्यादिभूतात्मकं
खातीतं खगमन्त्रतत्परपदं खद्योतकोट्युज्ज्वलम् ।
खावाच्यं खगकेतनं खगमनं खर्वाटशृङ्गालयं
खाराध्यञ्च खरन्ध्रपीठनिलयं रामं भजे तारकम् ॥ ३३

वेद्यं वेदगुरुं विरिञ्चिजनकं वेदान्तमूर्तिं स्फुर-
द्वेदं वेदकलापमूलमहिमाधारान्तकन्दाङ्कुरम् ।
वेदशृङ्गसमानशेषशयनं वेदान्तवेद्यात्मकं
वेदाराधितपादपङ्कजमहं रामं भजे तारकम् ॥ ३४

मूलाधारधनञ्जयस्फुटपटुज्वालासमालिङ्गितं
मूर्धन्यांतशशाङ्कमण्डलगतं क्षीराभिषेकप्रियम् ।
मुक्ताशोभितमौक्तिभिर्मुनिवरैराराधितं भावये
प्रख्यातैस्त्रिगणैर्जनाधिपगणैश्शाखामृगैर्दैवतैः ॥ ३५

ताराकारविमानमध्यनिलयं तत्त्वत्रयाराधितं
तत्वाधीश्वरयोगनिर्गुणमहासिद्धैस्समाराधितम् ।
तत्सङ्गं तरुणेन्दुशेखरसखं तारात्रयान्तर्गतं
तप्तस्वर्णकिरीटकुण्डलयुगं रामं भजे तारकम् ॥ ३६

तारं तारकमण्डलोपरिलसज्ज्योतिस्स्फुरत्तारका-
तीतं तत्त्वमसीतिवाक्यमहिमाधारं तटित्सन्निभम् ।

तत्त्वज्ञानपवित्रितत्रिभुवनं तारासनान्तर्गतं
तारान्तध्रुवमण्डलाब्जरुचिरं रामं भजे तारकम् ॥ ३७

कस्तूरीघनसारकुङ्कुमलसच्छ्रीचन्दनालङ्कृतं
कन्दर्पाधिकसुन्दरं घननिभं काकुत्स्थवंशध्वजम् ।
कल्याणांबरवेष्टितं कमलया युक्तं कलावल्लभं
कल्याणाचलकार्मुकप्रियसखं कल्याणरामं भजे ॥ ३८

मज्जीवं मदनुग्रहं मदधिपं मद्भावनं मत्सुखं
मत्तातं मम सद्गुरुं मम वरं मोहान्धविच्छेदनम् ।
मत्पुण्यं मदनेकबांधवजनं मज्जीवनं मन्निधिं
मत्सिद्धिं मम सर्वकर्मसुकृतं रामं भजे तारकम् ॥ ३९

नित्यं नीरजलोचनं निरुपमं नीवारशूकोपमं
निर्भेदानुभवं निरन्तरगुणं नीलाङ्गरागोज्ज्वलम् ।
निष्पापं निगमागमार्चितपदं नित्यात्मकं निर्मलं
निष्पुण्यं निखिलं निरञ्जनपदं रामं भजे तारकम् ॥ ४०

ध्याये त्वां हृदयांबुजे रघुपतिं विज्ञानदीपांकुरं
हंसोहंसपरंपरादिमहिमाधारं जगन्मोहनम् ।
हस्तांभोजगदाब्जचक्रमतुलं पीतांबरं कौस्तुभं
श्रीवत्सं पुरुषोत्तमं मणिनिभं रामं भजे तारकम् ॥ ४१

सत्यज्ञानमनन्तमच्युतमजं चाव्याकृतं तत्परं
कूटस्थादिसमस्तसाक्षिमनघं साक्षाद्विराट्तत्त्वदम् ।
वेद्यं विश्वमयं स्वलीनभुवनस्वाराज्यसौख्यप्रदं
पूर्णं पूर्णतरं पुराणपुरुषं रामं भजे तारकम् ॥ ४२

रामं राक्षसवंशनाशनकरं राकेन्दुबिंबाननं
रक्षोरिं रघुवंशवर्धनकरं रक्ताधरं राघवम् ।
राधायात्मनिवासिनं रविनिभं रम्यं रमानायकं
रन्ध्रान्तर्गतशेषशायिनमहं रामं भजे तारकम् ॥ ४३
ताराकारं निखिलनिलयं तत्त्वमस्यादिलक्ष्यं
शब्दावाच्यं त्रिगुणरहितं व्योममङ्गुष्ठमात्रम् ।
निर्वाणाख्यं सगुणमगुणं व्योमरन्ध्रान्तरस्थं
सौषुम्नांतःप्रणवसहितं रामचन्द्रं भजेऽहम् ॥ ४४
मुक्तेर्मूलं मुनिवरहृदानन्दकन्दं मुकुन्दं
कूटस्थाख्यं सकलवरदं सर्वचैतन्यरूपम् ।
नादातीतं कमलनिलयं नादनादान्ततत्त्वं
नादातीतं प्रकृतिरहितं रामचन्द्रं भजेऽहम् ॥ ४५
निजानन्दाकारं निगमतुरगाराधितपदं
परब्रह्मानन्दं परमपदगं पापहरणम् ।
कृपापारावारं परमपुरुषं पद्मनिलयं
भजे रामं श्यामं प्रकृतिरहितं निर्गुणमहम् ॥ ४६
श्रीमद्वैकुण्ठनाभं सुरमुनिमकुटद्योतितस्वर्णपीठं
नीलाङ्गं चन्द्रवक्त्रं मणिमयमकुटं बाणकोदण्डहस्तम् ।
पद्माक्षं पापनाशं प्रणवमयमहारत्नसिंहासनस्थं
श्रीसीतावामभागं श्रितजनवरदं रामचन्द्रं भजेऽहम् ॥ ४७
साकेते मणिमण्टपे सुरतरुप्रान्ते विमानान्तरे
पद्मे चाष्टदळोज्ज्वले नुतमहासौधे सुधामान्विते ।

सत्यं सूर्यजरावणानुजमरुत्पुत्रानुजैस्सेवितं
मध्ये वासवनीलकोमलनिभं रामं भजे तारकम् ॥ ४८

हृदयकुहरमध्यद्योतितन्मन्त्रसारं
निगमनियमगम्यं वेदशास्त्रैरचिन्त्यम् ।
हरिहरविधिवन्द्यं हंसमन्त्रान्तरस्थं
दशरथसुतमीळे दैवतं देवतानाम् ॥ ४९

देवेन्द्रनीलनवमेघविनिर्जिताङ्गं पूर्णेन्दुबिंबवदनं शरचापहस्तम् ।
सीतासमेतमनिशं शरणं शरण्यं चेतो मदीयमभिवांछति रामचंद्रम् ॥

ओतप्रोतसमस्तवस्तुनिचयं ओंकारबीजाक्षरं
ओंकारप्रकृतिं षडक्षरहितं ओंकारकन्दांकुरम् ।
ओंकारस्फुटभूर्भुवस्सुपरितं ओघत्रयाराधितं
ओंकारोज्जलसिंहपीठनिलयं रामं भजे तारकम् ॥ ५१

साकेते धवळे सुरद्रुमतले सौधे विमानान्तरे
आदिक्षान्तसमस्तवर्णकमले दिव्ये मृगेन्द्रासने ।
ओंकारोज्ज्वलकर्णिके सुरसरिन्मध्ये सदेवान्तरे
व्यासाद्यादिमुनीश्वराद्यभिनुतं रामं भजे तारकम् ॥ ५२

कोदण्डदीक्षागुरुमादिमूलं गुणाश्रयं चन्दनकुङ्कुमाङ्कम् ।
सलक्ष्मणं सर्वजनान्तरस्थं परात्परं राममहं नमामि ॥ ५३

मूलाधारसरोरुहे हुतवहस्थाने त्रिकोणान्तरे
कन्दे कुण्डलिकासुषुप्तिपटलीवासन्तवर्णाश्रये ।
बालार्कप्रतिमं पराभयकरं पाशाङ्कुशालङ्कृतं
भूतस्वाश्रयमादिपूरुषमजं रामं भजे तारकम् ॥ ५४

स्वाधिष्ठानसरोरुहे प्रविलसद्बालान्तवर्णाश्रयं
ब्रह्मग्रन्थिमहोन्नते करतले श्रीकुण्डिकामालिकाम् ।
पीठे रत्ननिभं पराभयकरं वाणीयुतं बिभ्रतं
साक्षाद्बोधमनन्यमङ्गळकरं रामं भजे तारकम् ॥ ५५

डापान्त्याक्षरपङ्कजे दशदळे माणिक्यसंपूरिते
विष्णुग्रन्थिमये पराभयकरं आशङ्खचक्रान्वितम् ।
मार्ताण्डद्युतिमञ्जुलाभमतुलं पीतांबरं कौस्तुभं
सर्वं सर्वगमिन्दिरासहचरं रामं भजे तारकम् ॥ ५६

हृत्पद्मे विलयार्ककोटिसदृशङ्काठान्तवर्णोज्ज्वले
प्राणान्तप्रणवान्तरे प्रविलसद्दोर्बाणपीठान्तरे ।
सूर्यं हंसमयं सदाशिवपदं कोदण्डदीक्षागुरुं
वासं मोक्षरमासमेतमनिशं रामं भजे तारकम् ॥ ५७

साक्षात् षोडशदिव्यपत्रकमले जीवात्मसंस्थापिते
रुद्रग्रन्थिमये मनोन्मनिपथे जालन्धरपीठान्तरे ।
शुभ्रज्योतिमयं शरीरसहितं सुस्थं सुधाशीतळं
शब्दब्रह्मनिवासभूतवदनं रामं भजे तारकम् ॥ ५८

भ्रूमध्ये निगमागमोज्ज्वलपदे चन्द्रे त्रिमार्गान्तरे
निर्द्वन्द्वे निखिलार्थतत्त्वविलसत्सूक्ष्मे सुषुम्नोन्मुखे ।
आसीनं प्रळयार्कभासुरवरं ज्योतिःस्वरूपात्मकं
त्रण्यांभ्यञ्चितमोक्षलक्ष्मिसहितं रामं भजे तारकम् ॥ ५९

शीर्षांभोरुहकर्णिके निरुपमे श्रीषोडशान्ते शशि-
प्रख्यातामृतवार्धिवीचिलहरीनिर्वाणपीठान्तरे ।

शब्दब्रह्मपरं चराचरगुरुं तेजःपरं शाश्वतं
सत्यासत्यमगोचरं हृदि सदा सीतासमेतं भजे ॥ ६०

साकेते रविकोटिसन्निभमहाहर्म्ये सुसिंह्मासने
नानारत्नविनिर्मिते मुनिजनाकीर्णे सदानन्दने ।
देवाधीश्वरसंयुते निवसितं वामाङ्कसीतोज्ज्वलं
देवेन्द्रोपलनीलकोमलतनुं रामं भजे तारकम् ॥ ६१

साकेते नगरे समस्तसुखदे हर्म्येऽब्जकोटिद्युते
नक्षत्रग्रहपंक्तिलग्नशिखरे चान्तर्यपङ्केरुहे ।
वाल्मीकात्रिपराशरादिमुनिभिस्संसेव्यमानं स्थितं
सीतालङ्कृतवामभागमनिशं रामं भजे तारकम् ॥ ६२

वन्दे राममनादिपूरुषमजं वन्दे रमानायकं
वन्दे हारकिरीटकुण्डलधरं वन्दे सुनीलद्युतिम् ।
वन्दे चापकलंबकोज्ज्वलकरं वन्दे जगन्मङ्गळं
वन्दे पंक्तिरथात्मजं मम गुरुं वन्दे सदा राघवम् ॥ ६३

वन्दे शौनकगौतमाद्यभिनुतं वन्दे घनश्यामलं
वन्दे तारकपीठमध्यनिलयं वन्दे जगन्नायकम् ।
वन्दे भक्तजनौघदेवविटपं वन्दे धनुर्वल्लभं
वन्दे तत्त्वमसीतिवाक्यजनकं वन्दे सदा राघवम् ॥ ६४

वन्दे सूर्यशशाङ्कलोचनयुगं वन्दे जगत्पावनं
वन्दे पत्रसहस्रपद्मनिलयं वन्दे पुरारिप्रियम् ।
वन्दे राक्षसवंशनाशनकरं वन्दे सुधाशीतलं
वन्दे देवकपींद्रकोटिविनुतं वन्दे सदा राघवम् ॥ ६५

वन्दे सागरगर्वभङ्गविशिखं वन्दे जगज्जीवनं
वन्दे कौशिकयागरक्षणकरं वन्दे गुरुणां गुरुम् ।
वन्दे बाणशरासनोज्ज्वलकरं वन्दे जटावल्कलं
वन्दे लक्ष्मणभूमिजान्वितमहं वन्दे सदा राघवम् ॥ ६३

वन्दे पाण्डरपुण्डरीकनयनं वन्देऽब्जबिंबाननं
वन्दे कंबुगळं कराब्जयुगळं वन्दे ललाटोज्ज्वलम् ।
वन्दे पीतदुकूलमंबुदनिभं वन्दे जगन्मोहनं
वन्दे कारणमानुषोज्ज्वलतनुं वन्दे सदा राघवम् ॥ ६७

वन्दे नीलसरोजकोमलरुचिं वन्दे जगद्वन्दितं
वन्दे सूर्यकुलाब्धिकौस्तुभमणिं वन्दे सुराराधितम् ।
वन्दे पातकपञ्चकप्रहरणं वन्दे जगत्कारणं
वन्दे विंशतिपञ्चतत्त्वरहितं वन्दे सदा राघवम् ॥ ६८

वन्दे साधकवर्गकल्पकतरुं वन्दे त्रिमूर्त्यात्मकं
वन्दे नादलयान्तरस्थलगतं वन्दे त्रिवर्गात्मकम् ।
वन्दे रागविहीनचित्तसुलभं वन्दे सभानायकं
वन्दे पूर्णदयामृतार्णवमहं वन्दे सदा राघवम् ॥ ६९

वन्दे सात्त्विकतत्त्वमुद्रिततनुं वन्दे सुधादायकं
वन्दे चारुचतुर्भुजं मणिनिभं वन्दे षडब्जस्थितम् ।
वन्दे ब्रह्मपिपीलिकादिनिलयं वन्दे विराड्विग्रहं
वन्दे पन्नगतल्पशायिनमहं वन्दे सदा राघवम् ॥ ७०

आयोध्यपुरमण्डपे स्फुरितसिंहपीठे स्थितं
वसिष्ठशुकगौतमैर्भृगुशुकादिभिस्सेवितम् ।

दिनेशसुतरावणानुजसहोदराद्यावृतं
भजामि रघुनन्दनं प्रणवबीजसारात्मकम् ॥ ७१
विलोलमणिमण्डलं विमलचन्द्रबिंबाननं
विखण्डितदशाननं विततचापबाणोज्ज्वलम् ।
विमोहितजगत्त्रयं विकचपद्मपत्रेक्षणं
विभीषणसुरक्षकं विजयराममीडे हरिम् ॥ ७२
चलत्कनककुण्डलोल्लसितदिव्यगण्डस्थलं
चराचरजगन्मयं चरणपद्मगङ्गाश्रयम् ।
चतुर्विधफलप्रदं चरमपीठमध्यस्थितं
चिदंशमखिलास्पदं दशरथात्मजं चिन्तये ॥ ७३
सनन्दनमुनिप्रियं सकलवर्णवेदात्मकं
समस्तनिगमागमस्फुरिततत्त्वसिंहासनम् ।
सहस्रनयनाब्जजाद्यमरबृन्दसंसेवितं
समष्टिपुरवल्लभं दशरथात्मजं चिन्तये ॥ ७४
अनर्घमणिपूरकोल्लसितदिव्यतेजःपरं
अनाहतसरोरुहस्फुरितहंसनादान्वितम् ।
अनन्तदळपङ्कजस्फुटमृगाङ्कबिंबामृतं
प्लुताङ्गमखिलास्पदं दशरथात्मजं चिन्तये ॥ ७५
जाग्रत्स्वप्नसुषुप्तिकालविलसत्तत्त्वात्मचिन्मात्रकं
चैतन्यात्मकमाधिपापरहितं भूम्यादितन्मात्रकम् ।
शांभव्यादिसमस्तयोगकुळकं सांख्यादितत्त्वात्परं
शब्दावाच्यमहं नमामि सततं व्युत्पत्तिनाशात्परम् ॥ ७६

ध्याये त्वां नवविद्रुमस्फुटतनुं बर्होल्लसन्मेचकं
नासारञ्जितमौक्तिकं परिलसत्पीताम्बरं कौस्तुभम् ।
वेणूकंबुरथाङ्गपाशपरिघाप्राप्तेक्षुचापाङ्कुशं
श्रीरामं नवमन्मथाधिपमहं षट्कोणचक्रस्थितम् ॥ ७७

साकेते नगरे समस्तमहिमाधारे जगन्मोहने
रत्नस्तंभसहस्रमण्टपमहासिंहासने सांबुजे ।
विश्वामित्रवसिष्ठगौतमशुकव्यासादिभिर्मौनिभिः
ध्येयं लक्ष्मणलोकपालसहितं सीतासमेतं भजे ॥ ७७

एकांते कमले जले विकसिते चन्द्राकृतिस्थापिते
स्थाने तारकमण्टपे तनुबिलव्याप्ते सुधामण्टपे ।
अब्जार्कानलमण्डलोपरिमहाश्रीषोडशांते सदा
नादांते जनकात्मजान्वितमहं रामं भजे तारकम् ॥ ७९

साकेते मणिमण्टपे सुरतरुप्रांतेऽष्टवर्णोल्लस-
त्पत्रे तारककर्णिके प्रविलसत्कल्पप्रसूनांचिते ।
पद्मे वेदचतुष्कमण्डलसिते नादांतशय्यातले
तं सेवे ध्रुवमण्डलेऽब्जविगळत्पीयूषधाराप्लुतम् ॥ ८०

ध्याये त्वां रविमण्डलेन्दुधवळे पद्मे निषण्णं हरिं
स्वर्णाभं करशङ्खचक्रललितं पीताम्बरं कौस्तुभम् ।
स्वर्णश्मश्रुनखालकं ललनया युक्तं किरीटाङ्गदं
हारालंकृतवक्षसं पदयुगश्रीपादुकालङ्कृतम् ॥ ८१

वसान्ताक्षराख्ये चतुःपत्रपद्मे त्रिकोणान्तकण्ठे धरातत्त्वयुक्ते ।
वराभीतिपाशाङ्कुशं विद्रुमाभं गजाश्वे निषण्णं भजे रामचन्द्रम् ॥८२

बलान्ताक्षरप्रान्तषट्पत्रपद्मे लसत्तोयतत्त्वे वराभीतिहस्तम् ।
महाकुण्डिकांचाक्षमालां वहन्तं चतुर्वक्त्ररूपं भजे रामचन्द्रम् ॥ ८३
उपान्ताक्षराख्ये मणिव्रातपूरे रथाङ्गाब्जहस्तं महेन्द्रोपलाङ्गम् ।
लसद्वह्नितत्त्वे निषण्णं गदाङ्कं महाविष्णुरूपं भजे रामचन्द्रम् ॥ ८४
कठान्ताक्षराख्ये जगत्प्राणतत्त्वे पराभीतिहस्तं त्रिशूलं दधानम् ।
उमानाथ मञ्जारिखण्डोज्ज्वलाङ्गं सदर्पाङ्गरूपं भजे रामचन्द्रम् ॥ ८५
विशुद्धाख्यपद्मे नभस्तत्त्वरम्ये अरूपं सुरूपं समस्तस्वरूपम् ।
विशिष्टं मनोगम्यमेकं त्वनादिं भजे जीवजीवात्मरामञ्च रामम् ॥
द्विपत्राब्जमध्ये मनस्तत्त्वगम्ये जगत्कारणं ज्योतिरानन्दरूपम् ।
लसद्भावविष्णुं मनोभावदीपं परात्मस्वरूपं भजे रामचन्द्रम् ॥ ८७
सदानन्ददेवे सहस्रारपद्मे गलच्चन्द्रपीयूषधारामृतान्ते ।
स्थितं राममूर्तिं निषेवे निषेवे ऽन्यदैवं न सेवे न सेवे न सेवे ॥ ८८
सुधाभासितद्वीपमध्ये विमाने सुपर्वाळिवृक्षोज्ज्वले शेषतल्पे ।
निषण्णं रमाङ्कं निषेवे निषेवे ऽन्यदैवं नसेवे नसेवे नसेवे ॥ ८९
चिदंशं समानन्दमानन्दकन्दं सुषुम्नाख्यरन्ध्रान्तराळे च हंसम् ।
सचक्रं सशङ्खं सपीताम्बराङ्कं परञ्चान्यदैवं नजाने नजाने ॥ ९०
सुपर्वाळिवृक्षोज्ज्वलस्वर्णपीठे वनौकादिभिर्मौनिभिस्सेव्यमानम् ।
स्थितं पुष्पवृष्ट्यावृतं राममूर्तिं सदाभूमिजायुक्तमीळे हृदन्ते ॥ ९१
करे दिव्यचक्रं परे चारुशङ्खं गळे तारहारं ललाटे ललामम् ।
भुजङ्गे निषण्णं परानन्दरूपं सदाभूमिजायुक्तमीळे हृदन्ते ॥ ९२
चतुर्वेदकूटोल्लसत्कारणाख्यं स्फुरद्दिव्यवैमानिके भोगितल्पे ।
परन्धाममूर्तिं निषण्णं निषेवे निषेवेऽन्यदैवं नसेवे नसेवे ॥ ९३

लसद्दिव्यशेषाचले योगपीठे सदानन्दवैमानिके मासहायम् ।
मुनीनां हृदानन्दमोङ्कारगम्यं सदाभूमिजायुक्तमीळे हृदन्ते ॥ ९४
मनस्थं मनोन्तस्स्थ माद्यन्तरूपं महाचिन्त्यवर्जं च मध्यस्थमीशम् ।
मनोबुद्ध्यहङ्कारचित्तादिसाक्षिं परस्वप्रकाशं भजे रामचन्द्रम् ॥ ९५
परानन्दवस्तुस्वरूपादिसाक्षिं परब्रह्मगम्यं परंज्योतिमूर्तिम् ।
पराशक्तिमित्राऽप्रियाराधिताङ्घ्रिं परन्धामरूपं भजे रामचन्द्रम् ॥
परं पवित्रं परवासुदेवं परात्परं तं परमेश्वराख्यं ।
गुणत्रयाराधितमूलकन्द मादित्यवर्णं तमसः परस्तात् ॥ ९७
साकेतेऽगरुगन्धधूपनिबिडे माणिक्यदीपान्विते
कस्तूरीघनसारकुङ्कुमरसप्राचुर्यसर्वोज्ज्वले ।
नानापुष्पवितानपंक्तिरुचिरे सौवर्णसिंहासने
वासं मन्मथमन्मथं मणिनिभं रामं भजे तारकम् ॥ ९८
भङ्गोत्तुङ्गमयामृताब्धिलहरीमध्ये विराड्विग्रहे
द्वीपे निर्जरपादपैः परिवृते कर्पूरदीपोज्ज्वले ।
ओङ्कारान्तरमन्दिरे मणिमये शेषान्तराशायिनं
लक्ष्मीयुक्तमसारचित्सुखपदं रामं भजे तारकम् ॥ ९९
वैकुण्ठे नगरे सुरद्रुमतले चानन्दवप्रान्तरे
नानारत्नविनिर्मितस्फुटपटुप्राकारसंवेष्टिते ।
सौधेन्दूपलशेषतल्पललिते नीलोत्पलच्छादिते
पर्यङ्के शयनं रमादिसहितं रामं भजे तारकम् ॥ १००
वैकुण्ठे पुटभेदने मणिमयप्रान्तेन्दुसिंहासने
अक्षान्तान्तसरोरुहे शशिगळत्पीयूषवार्यन्तरे ।

चन्द्रार्कानलभानुमण्डलयुते शेषाहितल्पांतरे
वासं वासवनीलकोमलनिभं रामं भजे तारकम् ॥ १०१
क्षीराब्धौ शशिशङ्खमौक्तिकलसद्वीपे सुधर्मान्तरे
बिन्दौ सार्थकळान्विते परिलसन्नागान्तरे संस्थितम् ।
कोटीराङ्गदहारकुण्डलमणिग्रैवेयहारोज्ज्वलं
श्रीवत्साश्चितमिन्द्रनीलसदृशं रामं भजे तारकम् ॥ १०२
साकेतेऽनलचन्द्रभानुविलसच्चित्रकाबिन्दुस्थितं
बालार्कद्युतिभासुरं करतले पाशाङ्कुशौ बिभ्रतम् ।
बाणं चापयुतं विशालनयनं स्मेराननांभोरुहं
स्त्रीपुंरूपधरं विलाससदनं रामं भजे तारकम् ॥ १०३
अर्धं रक्तपदाब्जनीलरुचिरं अर्धेन्दुचूडार्चितम्
अर्धं रत्नकिरीटकुण्डलधरं ताटङ्कमर्धं धनुः ।
शङ्खं चक्रगदाब्जसंयुतकरं श्रेयोमयं वैष्णवं
पाशं चांकुशबाणसंयुतकरं रामं भजे तारकम् ॥ १०४
सहस्रपत्राम्बुजकर्णिकान्तर्ज्योतिःप्रकाशं परमादिमूलम् ।
तेजोमयं जन्मजराविहीनं श्रीराघवं नित्यमहं नमामि ॥ १०५
सकलभुवनरत्नं सच्चिदानन्दरत्नं सकलहृदयरत्नं सूर्यबिम्बान्तरत्नं ।
विमलसुकृतरत्नं वेदवेदान्तरत्नं पुरहरजपरत्नं पातु मां रामरत्नम् ॥
इक्ष्वाकुवंशार्णवजातरत्नं सीताङ्गनायौवनभाग्यरत्नम् ।
वैकुण्ठरत्नं मम भाग्यरत्नं श्रीरामरत्नं शिरसा नमामि ॥ १०७
निगमशिशिररत्नं निर्मलानन्दरत्नम् निरुपमगुणरत्नं नादनादान्तरत्नम् ।
दशरथकुलरत्नं द्वादशान्तस्थरत्नं पशुपतिजपरत्नं पातु मां रामरत्नम् ॥

शतमखसुतरत्नं षोडशान्तस्थरत्नं मुनिजनजपरत्नं मुख्यवैकुण्ठरत्नम् ।
निरुपमगुणरत्नं नीरजान्तस्थरत्नं परमपदविरत्नं पातु मां रामरत्नम् ॥

सकलसुकृतरत्नं सत्यवाक्यार्थरत्नं शमदमगुणरत्नं शाश्वतानन्दरत्नम् ।
प्रणयनिलयरत्नं प्रस्फुटद्योतिरत्नं परमपदविरत्नं पातु मां रामरत्नम् ॥

निखिलनिलयमन्त्रं नित्यतत्त्वाख्यमन्त्रं
भवकुलहरमन्त्रं भूमिजाप्राणमन्त्रम् ।
पवनजनुतमन्त्रं पार्वतीमोक्षमन्त्रम्
पशुपतिनिजमन्त्रं पातु मां राममन्त्रम् ॥ १११

प्रणवनिलयमन्त्रं प्राणनिर्वाणमन्त्रं प्रकृतिपुरुषमन्त्रं ब्रह्मरुद्रेन्द्रमन्त्रम् ।
प्रकटदुरितरागद्वेषनिर्णाशमन्त्रं रघुपतिनिजमन्त्रं रामरामेतिमन्त्रम् ॥

दशरथसुतमन्त्रं दैत्यसंहारमन्त्रं विबुधविनुतमन्त्रं विश्वविख्यातमन्त्रम् ।
मुनिगणनुतमन्त्रं मुक्तिमार्गैकमन्त्रं रघुपतिनिजमन्त्रं रामरामेतिमन्त्रम् ॥

संसारसागरभयापहविश्वमन्त्रं साक्षान्मुमुक्षुजनसेवितसिद्धमन्त्रम् ।
सारङ्गहस्तमुखहस्तनिवासमन्त्रं कैवल्यमन्त्रमनिशं भज राममन्त्रम् ॥

जयतु जयतु मन्त्रं जन्मसाफल्यमन्त्रं जननमरणभेदक्लेशविच्छेदमन्त्रम् ।
सकलनिगममन्त्रं सर्वशास्त्रैकमन्त्रं रघुपतिनिजमन्त्रं रामरामेतिमन्त्रम् ॥

अज्ञानसम्भवभवाम्बुधिबाडबाग्नि रव्यक्ततत्त्वनिकरप्रणवाधिरूढः ।
सीतासमेतमनुजेन हृदन्तराळे प्राणप्रयाणसमये मम सन्निधत्ते ॥ ११६

श्रीरामकर्णामृते

द्वितीयाश्वासः

समाप्तः

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# ॥ श्रीरामकर्णामृतम् ॥

## तृतीयाश्वासः.

श्रीरामं शिवचापभङ्गनिपुणं सीताङ्गनावल्लभं
सुत्रामार्चितपादपद्मयुगळं सूर्येन्दुनेत्रोज्ज्वलम् ।
कर्पूराङ्गविलेपनं घनरुचिं कारुण्यपाथोनिधिं
वन्दे कल्पतरुप्रवेशितलसत्सिंहासनाधिष्ठितम् ॥ १

श्रीराम स्सितिकन्धरस्य धनुष स्संभेदनप्रापितां
सीतां काञ्चनसन्निभां परिणता माकल्परत्नोज्ज्वलाम् ।
वामाङ्कोपरि लज्जया नतमुखी मालोक्य दिव्यासने
श्रीमद्भानुशशाङ्ककोटिसदृशः पायात्स वो राघवः ॥ २

श्रीरामं भुवनैकसुन्दरतनुं धाराधरश्यामलं
राजीवायतलोचनं रघुवरं राकेन्दुबिम्बाननम् ।
कोदण्डादिनिजायुधाश्रितभुजं भान्तं विदेहात्मजा-
धीशं भक्तजनावनं रघुवरं श्रीरामचन्द्रं भजे ॥ ३

आरामं वैभवानामभिनवसुपथं हारकेयूरकान्तं
हासोल्लासाभिरामं मणिमयमकुटं मङ्गळानां निवासम् ।
मन्दारारामसीमान्तरमणिभवनाधिष्ठितं शिष्टसेव्यं
सल्लापानन्दसिन्धुप्रणय मभिनिशं रामचन्द्रं भजेऽहम् ॥ ४

रामं राजशिखामणिं रघुवरं राकेन्दुबिम्बाननं
राजीवायतलोचनं रणहतानेकासुरं राघवम्।
सीताचारुपयोधराञ्चितलसत्काश्मीरगन्धाञ्चितं
राजत्कुण्डलमण्डितं शुभकरं रामाभिरामं भजे ॥ ५

रामं कोमलनीलमेघविलसद्गात्रं पयोजाननं
काकुत्स्थं दशकण्ठबाहुविदळत्कोदण्डबाणान्वितम् ।
पापघ्नं विशदायताक्षियुगळं सौमित्रिसंसेवितं
भक्तानां परमौषधं मुनिवरैस्संस्तूयमानं भजे ॥ ६

रामं श्यामलमेघकोमलरुचिं राकेन्दुबिम्बाननं
रक्षोघ्नं रविजार्चितं रघुवरं रत्नोज्ज्वलत्कुण्डलम् ।
राजीवाक्षममानुषं रणबलोदग्रं रमानुग्रहं
राजेन्द्रं रमणीयरूप मसकृद्ध्याये जगन्मोहनम् ॥ ७

रामं रम्यगुणं रमापतिसमं राकाशशाङ्काननं
राजन्यं रमणीयरूपममलं रामाभिरामं हरिम् ।
राजाराधितपादपद्ममनिशं राजन्यसङ्घासितं
राकेन्दुप्रतिमं रमाकुचयुगे विन्यस्तहस्तं भजे ॥ ८

रामं कौशिकगौतमप्रियकरं सीतापतिं सानुजं
रक्षोघ्नं वनवासिनं गुणनिधिं विघ्नघ्नमाप्तार्कजम् ।
सेतोर्बन्धनधीरवानरबलं धिकुंभकर्णेंद्रजि-
त्पंक्तिग्रीव मवद्विभीषण मजं श्रीरामचन्द्रं भजे ॥ ९

रामं कोमलनीलनीरदनिभं नीलालकालंकृतं
कट्यां शोभितकिङ्किणीझणझणध्वानै रुपेतं शिशुम् ।

कंठालंबितरक्षुनिर्मलनखं कञ्जाक्ष मब्जच्छविं
भास्वन्तं मकुटाङ्गदादिविविधाकल्पं सदाऽहं भजे ॥ १०

रामं सीतासमेतं विमलरविशताभासमानं रसार्द्रं
श्यामं देदीप्यमानं स्मितरुचिरमुखं कुण्डलोद्भासगण्डम् ।
श्रीवत्सं श्रीनिवासं सुरतरुविलसद्रत्नसिंहासनस्थं
दिव्याकल्पोज्ज्वलाङ्गं दिविजपतिनुतं सन्ततं तं भजेऽहम् ॥ ११

जलनिधिकृतसेतुं देवतानन्दहेतुं
दशमुखमुखरक्षोदारवैधव्यहेतुम् ।
मुनिजननिवहानां मुक्तिसौख्यादिहेतुं
रघुवरकुलकेतुं कीर्तये धर्महेतुम् ॥ १२

सकलगुणनिधानं योगिभिस्स्तूयमानं
भजितसुरविमानं रक्षितेन्द्रादिमानम् ।
महितवृषभयानं सीतया शोभमानं
स्मरतु हृदयभानुं ब्रह्मरामाभिरामम् ॥ १३

वरगुणमणिसिन्धु मैथिलीप्राणबन्धुः
कनकशिखरिधैर्यो भूतलाब्जातसूर्यः ।
दशरथनृपसूनुः देववक्राब्जभानुः
जयतु भुवनभद्रो सर्वदा रामभद्रः ॥ १४

त्रिदशकुमुदचन्द्रो दानवांभोजचन्द्रो
दुरिततिमिरचन्द्रो योगिनां ज्ञानचन्द्रः ।
प्रणतनयनचन्द्रो मैथिलीनेत्रचन्द्रो
दशमुखरिपुचन्द्रः पातु मां रामचन्द्रः ॥ १५

स्वयुवतिकुचचन्द्रं बन्धुदुग्धाब्धिचन्द्रं
सुजनकुमुदचन्द्रं वैरिवक्राब्जचन्द्रम् ।
विकसितमुखचन्द्रं व्याप्तिसत्कीर्तिचन्द्रं
सकलभुवनचन्द्रं संततं रामचन्द्रम् ॥ १६

भेत्तारं दशकण्ठकण्ठकदळीः कन्दर्पदर्पापहं
श्रीकण्ठाकृतिमाप्नुवान ममलं घोरासुरप्राणदम् ।
बाणं प्रत्युपसंहरन्त मतुलं बाणासनोद्यत्करं
वन्देऽरातिभयावहं मुनिनुतं रामं घनश्यामलम् ॥ १७

आकर्णान्तगुणोल्लसच्छरमजं कल्पान्तकालोपमं
नेत्रांतारुणतां वहन्तमनिशं प्रह्लाददं नाकिनाम् ।
पौलस्त्यासुरदृष्टिचञ्चलकरं शस्त्रास्त्रसन्धायिनं
बाणानेकविचित्रहस्तकुशलं श्रीवीररामं भजे ॥ १८

नहि माता नहि तातो नहि मम तनयाश्च नैव सोदर्यः ।
इति मम निकटे मृत्यौ रघुपतिरयमेव बन्धुरासन्नः ॥ १९

देवेन्द्रेण समर्पिते ध्वजयुते तत्स्यन्दने संस्थितं
सोत्कण्ठं सुरवैरिवीर्यविभवं ज्ञात्वा भुजास्फालनम् ।
कृत्वा सूतयुतं दशाननहरं तूणीरसंस्थं शरं
हृत्वा ज्यानिनदादरातिभयदं श्रीवीररामं भजे ॥ २०

रुचिरमणिकिरीटं सुन्दरभ्रूललाटं
कनकरुचिरचेलं काशसद्भोगखेलम् ।
विमलजलदनीलं कुण्डलोद्भासिकर्णं
रघुकुल जनरत्नं सन्ततं चिन्तयामि ॥ २१

श्रीवत्साङ्क मुदारकौस्तुभलसत्पीताम्बरालङ्कृतं
नानारत्नविराजमानमकुटं नीलाम्बुदश्यामलम् ।
कस्तूरीघनसारचर्चिततनुं मन्दारमालाधरं
कन्दर्पायुतसुन्दरं रघुपतिं सीतासमेतं भजे ॥ २२

यन्नामैव सहस्रनामसदृशं यन्नाम वेदै स्समं
यन्नामाङ्कितवाक्य मासुरबलस्त्रीगर्भविच्छेदनम् ।
यन्नाम श्वपचार्यभेदरहितं मुक्तिप्रदानोज्ज्वलं
तन्नामाऽलघुरामरामरमणं श्रीरामनामामृतम् ॥ २३

रामं राक्षसमर्दनं रघुवरं दैतेयविध्वंसिनं
सुग्रीवेप्सितराज्यदं सुरपते र्भीत्यन्तकं शार्ङ्गिणम् ।
भक्ताना मभयप्रदं भयहरं पापौघविध्वंसिनं
सामीरिस्तुतपादपद्मयुगळं सीतासमेतं भजे ॥ २४

रामं रक्तसरोरुहाक्ष ममलं लङ्काधिनाथान्तकं
कौसल्यानयनोत्सुकं रघुवरं नागेन्द्रतल्पस्थितम् ।
वैदेहीकुचकुम्भकुङ्कुमरजोऽलङ्कारहारं हरिं
मायामानुषविग्रहं रघुपतिं सीतासमेतं भजे ॥ २५

रामं हेमतटित्प्रभांशुकधरं वीरासने संस्थितं
बालं नीलमणिप्रभं मधुरिपुं दैत्येन्द्रगर्वापहम् ।
विश्वामित्रवसिष्ठवानरवरैस्संसेव्यमानं सदा
नित्यं भास्करचन्द्रकोटिसदृशं सीतासमेतं भजे ॥ २६

शत्रुघ्नो व्यजनाङ्कितोऽपि भरतः पार्श्वद्वये पश्चिमे
छत्रे चामरसंयुतं कलितवान् यं सेवते लक्ष्मणः ।

मूले कल्पतरोर्विमानविलसन्माणिक्यसिंहासने
पद्मास्यं मुनिसेवितं रघुपतिं सीतासमेतं भजे ॥ २७

वामाङ्कोपरि तप्तकाञ्चननिभं सीतासमालोकितं
हस्ताभ्यां धृतछत्रचामरमहासौमित्रिणा सेवितम् ।
नित्यं पूजितपादपद्मयुगळं देवैस्सुरेन्द्रादिभिः
सेव्यं मानुषराक्षसैः कपिवरैश्श्रीरामचन्द्रं भजे ॥ २८

कस्तूरीतिलकं कपीन्द्रहरणं कारुण्यवारांनिधिं
क्षीराम्भोधिसुतामुखाब्जमधुपं कल्याणसंपन्निधिम् ।
कौसल्यानयनोत्सुकं कपिवरत्राणं महापौरुषं
कौमारप्रिय मर्ककोटिसदृशं सीतासमेतं भजे ॥ २९

विद्युत्कोटिदिवाकरद्युतिनिभं श्रीकौस्तुभालङ्कृतं
योगीन्द्रैस्सनकादिभिः परिवृतं कैलासनाथप्रियम् ।
मुक्तारत्नकिरीटकुण्डलधरं ग्रैवेयहारान्वितं
वैदेहीकुचसन्निवासमनिशं सीतासमेतं भजे ॥ ३०

विद्युत्कोटिसहस्रभानुसदृशं सिंहासने संस्थितं
मूले कल्पतरो महामणिमये भासं परेशं विभुम् ।
सुग्रीवाङ्गदजाम्बवादिहरिभिः संसेव्यमानं हरिं
शंभुब्रह्मसुरादिभिः परिवृतं सीतासमेतं भजे ॥ ३१

मेघश्यामल मम्बुजातनयनं विस्तीर्णवक्षस्स्थलं
बाहुद्वन्द्वविराजितं सुवदनं शोणाङ्घ्रिपङ्केरुहम् ।
नानारत्नविचित्रभूषणयुतं कोदण्डबाणाङ्कितं
त्रैलोक्याऽप्रतिमानसुन्दरतनुं सीतासमेतं भजे ॥ ३२

दिव्यारण्ययतीन्द्रनामनगरे मध्ये महामण्टपे
स्वर्णस्तम्भसहस्रषोडशयुते मन्दारमूलाश्रिते ।
नानारत्नविचित्रनिर्मलमहासिंहासने संस्थितं
सीतालक्ष्मणसेवितं रघुपतिं सीतासमेतं भजे ॥ ३३

यत्पादाम्बुजसम्भवा त्रिपथगा भागीरथी मुक्तिदा
लोकानां हतकिल्बिषा भगवती मन्दाकिनी शाम्भवी ।
लोके भाति सरस्वती सुरनदी पुण्येन्दुकान्तिप्रभा
तं विष्णुं भरताग्रजं रघुवरं सीतासमेतं भजे ॥ ३४

यत्पादाम्बुजरेणुना मुनिसती मुक्तिंगता यन्महः
पुण्यं पातकनाशनं त्रिजगतां भाति स्मृतं पावनम् ।
स्मृत्वा राघव मप्रमेय ममलं पूर्णेन्दुमन्दस्मितं
तं रामं सरसीरुहाक्ष ममलं सीतासमेतं भजे ॥ ३५

वैदेहीकुचमण्डलाग्रविलसन्माणिक्यहस्ताम्बुजं
चञ्चत्कङ्कणहारनूपुरलसत्केयूरहारान्वितम् ।
दिव्यश्रीमणिकुण्डलोज्ज्वलमहाभूषासहस्रान्वितं
वीरश्रीरघुपुङ्गवं गुणनिधिं सीतासमेतं भजे ॥ ३६

वैदेहीकुचमण्डलोपरिलसन्माणिक्यहारावळी-
मध्यस्थं नवनीतकोमलरुचिं नीलोत्पलश्यामलम् ।
कन्दर्पायुतकोटिसुन्दरतनुं पूर्णेन्दुबिम्बाननं
कौसल्याकुलभूषणं रघुपतिं सीतासमेतं भजे ॥ ३७

वैदेहीयुतवामभाग मतुलं वन्दारुमन्दारकं
वन्दे प्रस्तुतकीर्तिवासिततरुच्छायानुकारिप्रभम् ।

वैदेहीकुचकुङ्कुमाङ्कितमहोरस्कं महाभूषणं
वेदान्तैरुपगीयमानमसकृत्सीतासमेतं भजे ॥ ३८

वैदेहीस्तनकुम्भसम्भ्रमपरीरम्भादृतं सिन्धुगं
राकाचन्द्रनिभाननं रघुवरं राजीवपत्रेक्षणम् ।
प्रावृण्मेघनिभद्युतिं स्मितयुतं हारावळीभूषितं
श्रीरामं प्रणमामि भक्तजनताचिन्तामणिं सन्ततम् ॥ ३९

वैदेहीरमणीहिरण्यतिलकं विश्वम्भरापालकं
वर्धिष्णुं विविधायुधेषु निपुणं विद्वज्जनश्रीकरम् ।
विद्यावासगृहं वियच्चरनुतं विद्युत्प्रकाशाम्बरं
विप्रत्राणविधेयमादिपुरुषं श्रीरामचन्द्रं भजे ॥ ४०

वैदेहीवशवर्तिनं रणजितं रत्नाकरागारिणं
पंक्तिग्रीवमदापहं पटुभुजं पद्माप्तकोटिप्रभम् ।
विष्णुं जिष्णुमवार्यशौर्यनिलयं नीलाम्बुदश्यामलं
रत्नालङ्करणान्वितं रघुपतिं श्रीरामचन्द्रं भजे ॥ ४१

देवानां हितकारणेन भुवने धृत्वाऽवतारं ध्रुवं
रामं कौशिकयज्ञविघ्नदळनं तत्ताटकासंहरम् ।
नित्यं गौतमपत्निशापदळनश्रीपादरेणुं शुभं
शम्भोरुत्कटचापखण्डनमहासत्वं भजे राघवम् ॥ ४२

राजीवनेत्र रघुपुङ्गव रामभद्र राकेन्दुबिम्बसदृशानन नीलगात्र ।
रामाऽभिराम रघुवंशसमुद्भव त्वं श्रीरामचन्द्र मम देहि करावलम्बम्॥

मुकुररुचिरगण्डं पुण्डरीकाभतुण्डं
करिकरभुजदण्डं रौद्रतेजोग्निकुण्डम् ।

नमितभुवनषण्डं भेदितोग्रारिमण्डं
गुणनिकरकरण्डं नौमि रामप्रचण्डम् ॥ ४४
कोदण्डकाण्डविनिवेशितबाहुदण्ड माखण्डलाद्यमरवर्षितपुष्पवर्षम् ।
आयोधनस्थितरजःपरिधूसराङ्ग मप्यूर्जितं रघुवरेन्द्रमरिप्रभेदम् ॥
सेव्यं श्रीराममन्त्रं श्रवणशुभकरं श्रेष्ठसुज्ञानिमन्त्रं
स्तव्यं श्रीराममन्त्रं नरकदुरितदुर्वारनिर्घातमन्त्रम् ।
भव्यं श्रीराममन्त्रं भजतु भजतु संसारनिस्तारमन्त्रं
दिव्यं श्रीराममन्त्रं दिवि भुवि विलसन्मोक्षरक्षैकमन्त्रम् ॥ ४६
आजानुबाहु मरविन्ददृशं शुभाङ्गं
राजाधिराज मघराजितमःपतङ्गम् ।
श्रीजानकीमुखसरोरुहमत्तभृङ्गं
श्रीनायकं हृदि भजामि कृपान्तरङ्गम् ॥ ४७
एकेन बाणमपरेण करेण चापं हर्षा द्वहन्त मसमानजटाशिरस्कम् ।
सीतासहाय मनुजेन समं चरन्तं श्रीरामचन्द्र मनिशं कलयामि चित्ते॥
आमीलयन् दशशिरोवदनाम्बुजात-
मुन्मीलयन् जनकजानयनोत्पले च ।
आनन्दयन् सकलजीवचकोरराशिं
श्रीरामचन्द्रविभुरस्तु मदीयचित्ते ॥ ४९
रामं पुराणपुरुषं रमणीयवेषं राजाधिराजमकुटार्चितपादपीठम् ।
सीतापतिं सुनयनं जगदेकवीरं श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥
सिंहासनस्थं सुरसेवितव्यं रत्नाङ्कितालङ्कृतपादपद्मम् ।
सीतासमेतं शशिसूर्यनेत्रं रामं भजे राघवरामचन्द्रम् ॥ ५१

सुग्रीवमित्रं सुजनानुरूपं लङ्काहरं राक्षसवंशनाशम् ।
वेदाश्रयाङ्गं विपुलायताक्षं रामं भजे राघवरामचन्द्रम् ॥ ५२

अनन्तकीर्तिं वरदं प्रसन्नं पद्मासनं सेवकपारिजातम् ।
राजाधिराजं रघुवीरकेतुं रामं भजे राघवरामचन्द्रम् ॥ ५३

पद्मासनस्थं सुरसेवितव्यं पद्मालयानन्दकटाक्षवीक्ष्यम् ।
गन्धर्वविद्याधरगीयमानं रामं भजे राघवरामचन्द्रम् ॥ ५४

अचिन्त्य मव्यक्त मनन्तरूप मद्वैत मानन्द मनादिगम्यम् ।
पुण्यस्वरूपं पुरुषोत्तमाख्यं रामं भजे राघवरामचन्द्रम् ॥ ५५

मन्दस्मितं कुण्डलगण्डभागं पीताम्बरं भूषणभूषिताङ्गम् ।
नीलोत्पलाङ्गं भुवनैकमित्रं रामं भजे राघवरामचन्द्रम् ॥ ५६

डिण्डीरहासमणिकुण्डलचारुकर्ण दोर्दण्डशौर्यजितभण्डनशौर्य धीर ।
कोदण्डकाण्डपरिमण्डित पार्थिवेन्द्र वेतण्डयान जय राघवरामचन्द्र ॥

लोकान् सप्त निनादयन् हरिहयस्याऽन्तर्भयं वर्धयन्
सप्तानां च भुवां प्रकम्प मुदयन् सप्तार्णवान् घूर्णयन् ।
उन्मीलानि रसातलानि जनयन् सप्ताऽपि पृथ्वीधरान्
सुश्रीराघवबाहुदण्डविदळत्कोदण्डचण्डध्वनिः ॥ ५८

ब्रह्माण्डं दलयन् वियद्विदळयन् भोगीशभोगस्थले
सन्त्रासं जनयन् समुद्रपटलीतोयं समुद्वेल्लयन् ।
दिक्पालानपि क्षोभयन कुलगिरौ दीर्णत्वमापादयन्
नक्षत्राणि च पातयन् विलसते शौरे र्धनुर्ज्यारवः ॥ ५९

यश्चण्डगाम्भीर्यधनुर्विजेता भूमण्डलीपुण्यकृतावतारः ।
आखण्डलाद्यैरमरै रुपेतः कोदण्डपाणिः कुलदैवतं नः ॥ ६०

वैदेह्या सममेत्य राज्यमनिशं सौवर्णसिंहासने
मन्दारद्रुमवाटिकान्तरमहाश्रीचन्द्रकान्तालये ।
कैकेयीतनयाञ्जनातनयसत्सौमित्रिसंसेवितं
मेघश्याममुदारहासवदनं श्रीरामचन्द्रं भजे ॥ ६१

वैदेह्याः पुलकाङ्कुरार्चिततनुव्यालम्बहस्ताम्बुजो
हस्ते मोदितरत्नकङ्कणरवः कल्पद्रुमाणां वने ।
पादाभ्यां मणिपादुकाद्युतिकरप्रेङ्खन्नखाभ्यां चर-
न्निष्टालापसुधारसं दिशतु मे श्रीरामचन्द्रो हरिः ॥ ६२

वामाङ्कस्थितजानकीकुचयुगे विन्यस्तहस्ताम्बुजं
प्रोज्जृम्भाननपङ्कजोपरि लसद्विस्पष्टबिम्बाधरम् ।
सत्तारेण विशिष्टकङ्कणरवे चोङ्कारशब्दाश्रये
भान्तं शारदचन्द्रहास मनिशं वन्दे सदा राघवम् ॥ ६३

वैदेहीसहितं च लक्ष्मणयुतं कैकेयिपुत्रान्वितं
सुग्रीवं च विभीषणानिलसुतौ नीलं नलं साङ्गदम् ।
विश्वामित्रवसिष्ठगौतमभरद्वाजादिकान् मानयन्
रामो मारुतिसेवितः स्मरतु मां साम्राज्यसिंहासने ॥ ६४

रामः प्राञ्जलि मग्रतोऽनिलसुतं सौहार्द मादर्शयन्
प्रश्चच्चामरयुग्मभासितकरान् पश्चात् स्थले पार्श्वयोः ।
वामाङ्केऽवनिजां विभीषणमुखान् संभावयन् बोधयन्
धीमुद्राकरतत्त्वरूप मवतात् साम्राज्यसिंहासने ॥ ६५

पौगण्डेहितबालकैः परिवृतः पूर्णेन्दुकान्ताननः
प्रीत्याबद्धविचित्रहेमवसने संसक्तकाञ्चीगुणः ।

आजानुप्रविलम्बबाहुयुगळ श्शयामाम्बुभृद्विग्रहो
भ्रातृस्वानुचरश्चराचरगुरुः पायात्सदा राघवः ॥ ६६
वैदेहीरमणीयवक्त्रवनजप्रद्योतखद्योतनं
केळीसद्मनि रत्नदीपकळिकाकान्ते वसन्तं हरिम् ।
सौरभ्यप्रसवप्रयुक्तविलसच्छय्यान्तरे शायिनं
श्रीमन्तं रघुवंशदीपकमणिं श्रीरामचन्द्रं भजे ॥ ६७
रामो बद्धपयोनिधिर्गुणनिधि र्गत्वा समं वानरैः
लङ्कां प्राप्य सकुम्भकर्णदनुजं हत्वा रणे रावणम् ।
तत्र स्थाप्य विभीषणं पुनरगात्सीतापतिः पुष्पकं
चारूढः पुनरागतस्स भृतवान् धात्रीमजः पातु नः ॥ ६८
रत्नोल्लसज्ज्वलितकुण्डलगण्डभागं
कस्तूरिकातिलकशोभितफालभागम् ।
कर्णान्तदीर्घनयनं करुणाकटाक्षं
श्रीरामचन्द्रमुखमात्मनि सन्निधत्ताम् ॥ ६९
हेलाभग्नशशाङ्कशेखरधनुर्भूमण्डलाखण्डल-
श्रेणीमौळिलसद्विनूत्नमणिभि र्दीप्ताङ्घ्रिपङ्केरुहः ।
कल्याणं जनयत्वखण्डविभवः कल्याणलीलोत्सवे
मार्ताण्डान्वयमण्डनश्च भवतां रामस्सरामस्सदा ॥ ७०
विद्युत्स्फुरन्मकरकुण्डलदीप्तचारु
गण्डस्थलं मणिकिरीटविराजमानम् ।
पीताम्बरं जलदनीलमुदारकान्तिं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ७१

करतलधृतचापं कालमेघस्वरूपं
सरसिजदळनेत्रं चारुहासं सुगात्रम् ।
विचिनुतवनवासं विक्रमोदग्रवेषं
प्रणमत रघुनाथं जानकीप्राणनाथम् ॥ ७२

यः पृथ्वीभरवारणाय दिविजैस्संप्रार्थितश्चिन्मयः
सञ्जातः पृथिवीतले रविकुले मायामनुष्योऽव्ययः ।
निश्चक्रं हतराक्षसः पुनरगा द्ब्रह्मत्वमाद्यं स्थिरां
कीर्तिं पापहरां विधाय जगतां तं जानकीशं भजे ॥ ७३

विश्वोद्भवस्थितिलयादिषु हेतु मेकं
मायाश्रयं विगतमायमचिन्त्यमूर्तिम् ।
आनन्दसान्द्र ममलं निजबोधरूपं
सीतापतिं विदिततत्त्व महं नमामि ॥ ७४

श्रीरामं नवरत्नकुण्डलधरं श्रीरामरक्षामणिं
श्रीरामं च सहस्रभानुसदृशं श्रीरामचन्द्रोदयम् ।
श्रीरामं श्रुतकीर्तिमाकरमहं श्रीराममुक्तिप्रदं
श्रीरामं रघुनन्दनं भयहरं श्रीरामचन्द्रं भजे ॥ ७५

रामचन्द्रचरणारविन्दयो रन्तरङ्गचरभृङ्गलीलया ।
तत्र सन्ति च रसा श्चतुर्विधा माकरन्दरसएव पङ्कजे ॥ ७६

रामः पातु सदैव मा मरिभया द्रामं सदा भावये
रामेणैव हृतं महत्तरतमो रामाय नित्यं नमः ।
रामा न्नास्ति परं पदं सुललितौ रामस्य पादौ भजे
रामे प्रीति रचञ्चलाऽस्तु मम हे श्रीराम मां पालय ॥ ७७

राम मिन्दीवरश्यामं राजीवायतलोचनम् ।
ज्याघोषनिर्जितारातिं जानकीरमणं भजे ॥ ७८

नानादिव्यास्त्रतेजस्स्फुरदमितभुज श्शत्रुसंहारधीरः
कौटिल्योद्द्योतमानभ्रुकुटियुतमुखं धारयन्नम्बुदाभः ।
तूणीरप्रोत्थवेगोल्लसितशरवरं ताडयित्वा दशास्यं
वीरश्रीबन्धुराङ्ग स्त्रिदशपतिनुतः पातु मां वीररामः ॥ ७९

हत्वा युद्धे दशास्यं त्रिभुवनविषमं वामहस्तेन चापं
भूमा वारोप्य तिष्ठ न्नितरकरधृतं भ्रामयन् बाण मेकम् ।
आरक्तोपान्तनेत्र श्शरदळितवपुः कोटिसूर्यप्रकाशो
वीरश्रीबन्धुराङ्ग स्त्रिदशपतिनुतः पातु मां वीररामः ॥ ८०

युद्धे सन्नद्धशस्त्रं कपिवरभयदं कुम्भकर्णं सुरारिं
बाणेनैकेन सद्यः प्रकटितहुतभुग्विस्फुरोषारुणाक्षम् ।
हत्वा कृत्वा प्रमोदं सुरकपिवितते मौनिबृन्दैकसेव्यो
वीरश्रीबन्धुराङ्ग स्त्रिदशपतिनुतः पातु मां वीररामः ॥ ८१

दैतेयोदग्रसेव्यं पटुतरविशिखं भीषणं घोरनादं
देवेन्द्रस्तूयमानस्फुरदरिनिकरानन्धकारांश्च हत्वा ।
दिक्पालान् प्राप्तभोगान्मणिरुचिसुभगान् दिक्षु तान् स्थापयित्वा
वीरश्रीबन्धुराङ्ग स्त्रिदशपतिनुतः पातु मां वीररामः ॥ ८२

कौसल्यावीरगर्भाम्बुधिघनविलसत्पूर्णचन्द्रप्रकाशो
मौनीन्द्रस्वान्तपद्मप्रविमलतरणि र्धर्मनैपुण्यरूढः ।
मारीचं राक्षसेन्द्रं निजशरदहनायाऽऽहुतिं कल्पयित्वा
वीरश्रीबन्धुराङ्ग स्त्रिदशपतिनुतः पातु मां वीररामः ॥ ८३

यो दण्डकारण्यनिशाचरेन्द्रान् कोदण्डलीलाविषयां श्चकार ।
वेदण्डशुण्डायितबाहुदण्डः कोदण्डपाणिः कुलदैवतं नः ॥ ८४
तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ ८५
फलमूलाशिनौ दान्तौ तापसौ धर्मचारिणौ ।
रक्षःकुलविहन्तारौ भ्रातरौ रामलक्ष्मणौ ॥ ८६
कल्याणानां निदानं कलिमलदहनं पावनं पावनानां
पाथेयं मोक्षसिद्धिप्रथितसुपदवीप्राप्तये प्रस्थितस्य ।
विश्रामस्थान मेकं कविवरवचसां जीवनं जीवितानां
बीजं धर्मद्रुमस्य प्रभवति भवतां भूतये रामनाम ॥ ८७
कौसल्यानयनेन्दुं दशरथमुखारविन्दमार्ताण्डं ।
सीतामानसहंसं रामं राजीवलोचनं वन्दे ॥ ८८
दीर्घबाहु मरविन्दलोचनं दीनवत्सल मनाथरक्षकम् ।
दीक्षितं सकललोकरक्षणे दैवतं दशरथात्मजं भजे ॥ ८९
सत्येन लोकान् जयति दीनान दानेन राघवः ।
गुरुं शुश्रूषया वीरो धनुषा युद्धशात्रवान् ॥ ९०
भर्जनं भवबीजानां मार्जनं सुखसंपदाम् ।
तर्जनं यमदूतानां रामरामेति कीर्तनम् ॥ ९१
सकृत्प्रणतरक्षायां साक्षी यस्य विभीषणः ।
सापराधप्रतीकारः स श्रीरामो गति र्मम ॥ ९२
न जाने जानकीजाने ! राम ! त्वन्नामवैभवम् ।
सर्वेशो भगवान् शम्भु र्वाल्मीकि र्वेत्ति वा नवा ॥ ९३

कृत्याकृत्यविवेकहीनमनसां हत्यादिभिर्जीविना-
मत्यन्तं बहुतारकं तनुभृता मत्यन्तशोकापहम् ।
सत्यानन्दमयं समस्तनिगमस्तुत्यास्पदं सम्पदां
स्थानं श्रीरघुरामनाम विमलं नित्यं स्मरन् मुच्यते ॥ ९४
साकेते स्वनिकेतने सुरतरो मूले लसद्वेदिके
पद्मं रत्नमयं दधान मपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं परिपूर्णचन्द्रवदनं भास्वत्किरीटं भजे ॥ ९५
विद्युद्वर्णोपमाङ्गीं विकचबिसमुखीं विद्रुमाभाधरोष्ठीं
वेदण्डौद्धत्यकुम्भप्रतिकुचयुगळां वेदिमध्यावतंसाम् ।
श्यामां संफुल्लपद्मच्छदनिभनयनां चारुहासां सुनासां
सीतां श्रीरामदेवीं श्रितजनवरदां चिन्तयेऽनन्तमूर्तिम् ॥ ९६
माणिक्यमञ्जीरपदारविन्दां रामार्कसंफुल्लमुखारविन्दाम् ।
भक्ताभयप्रापिकरारविन्दां देवीं भजे राघववल्लभां ताम् ॥ ९७
जयतु विजयकारी जानकीमोदकारी
तपनकुलविहारी दण्डकारण्यचारी ।
दशवदनकुठारी दैत्यविच्छेदकारी
मणिमकुटकधारी चण्डकोदण्डधारी ॥ ९८
चेतस्स्थितं चिन्तकचिन्तनीयं चिन्ताहरं चिन्तितपारिजातम् ।
अचिन्तनीयं बहुचिन्तयेऽहं तमेव रामं भुवनाभिरामम् ॥ ९९
साकेते शरदिन्दुकुन्दधवळे सौधे महामण्टपे
पर्यस्तागरुधूपधूमपटले कर्पूरदीपोज्ज्वले ।

सुग्रीवाङ्गदवायुपुत्रसहितं सौमित्रिणा सेवितं
लीलामानुषविग्रहं रघुपतिं रामं भजे श्यामलम् ॥ १००
रामः पिता राघव एव माता राम स्सुबन्धुश्च सखा हितश्च ।
रामो गुरु र्मे परमं च दैवं रामं विना नाऽन्यमहं स्मरामि ॥
या कृपा मुनिसन्त्राणे या कृपा कपिनायके ।
या विभीषणरक्षायां सा राम मम दीयताम् ॥ १०२
दयानिधे राघव रामचन्द्र निरस्य पापानि ममाऽखिलानि ।
त्वय्येव भक्तिं सुदृढां प्रयच्छ सैव प्रसूते ह्यखिलानभीष्टान् ॥
अक्षीणबाणतूणीर स्समारोपितकार्मुकः ।
दशग्रीवशिरोहन्ता श्रीराम श्शरणं मम ॥ १०४
श्रीराम मे त्वं हि पिताच माता श्रीराम मे त्वं हि सुहृच्च बन्धुः ।
श्रीराम मे त्वं हि गुरुश्च गोष्ठी श्रीराम मे त्वं हि समस्तमेव ॥
पटुतरजलवाहध्वानमादाय चापं
पवनजवन मेकं बाण माकृष्य तूणात् ।
अभयवचनदायी सानुज स्सर्वतो मे
रणहतदनुजेन्द्रो रामचन्द्र स्सहायः ॥ १०६
कौसल्यालसदालवालजनित स्सीतालतालिङ्गित-
स्सिक्तः पंक्तिरथेन सोदरमहाशाखाभिरत्युन्नतः ।
रक्षस्तीक्ष्णनिदाघपाटनपटुच्छायाभि रानन्दय-
न्नस्मद्वाञ्छितसत्फलानि फलतु श्रीरामकल्पद्रुमः ॥ १०७
निगमशिखररत्नं नित्यमाशास्यरत्नं
जननुतनृपरत्नं जानकीरूपरत्नम् ।

भुवनवलयरत्नं भूभुजामेकरत्नं
रघुकुलवररत्नं पातु मां रामरत्नम् ॥ १०८
विशालनेत्रं परिपूर्णगात्रं सीताकलत्रं सुरवैरिजैत्रं ।
कारुण्यपात्रं जगतः पवित्रं श्रीरामरत्नं प्रणतोऽस्मि नित्यम् ॥ १०९
श्रीरामचन्द्र श्श्रितपारिजातः समस्तकल्याणगुणाभिरामः ।
सीतामुखाम्भोरुहचञ्चरीको निरन्तरं मङ्गलमातनोतु ॥ ११०
इन्दीवरदलश्यामः पुण्डरीकनिभेक्षणः ।
धृतकोदण्डतूणीरो राम एव गतिर्मम ॥ १११
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥ ११२
रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितु-
र्वाचा पञ्चवटीवने विहरतस्तामाहरद्रावणः ।
निद्रार्थं जननीकथामिति हरे र्हुङ्कारत श्शृण्वत-
स्सौमित्रे क्व धनु र्धनु रिति व्यग्रा गिरः पान्तु नः ॥ ११३
श्रीरामचन्द्रेति दयापरेति
भक्तप्रियेति भवबन्धनमोचनेति ।
नाथेति नागशयनेति सदा स्तुवन्तं
मां पाहि भीत मनिशं कृपणं कृपालो ॥ ११४
रामचन्द्रचरितामृतपानं सोमपानशतकोटिसमानम् ।
सोमपानशतकोटिभिरीयाज्जन्म नैति रघुनायकनाम्ना ॥ ११५
राम राम दयासिन्धो रावणारे जगत्पते ।
त्वत्पादकमलासक्ति र्भवे ज्जन्मनि जन्मनि ॥ ११६

श्रीराघवं रामचन्द्रं रावणारिं रमापतिम् ।
राजीवलोचनं रामं तं वन्दे रघुनायकम् ॥ ११७

यत्पादपङ्कजरज श्श्रुतिभि र्विमग्नं
यन्नाभिपङ्कजभवः कमलासन स्स्यात् ।
यन्नामसाररसिको भगवान् पुरारि-
स्तं रामचन्द्र मनिशं हृदि भावयामि ॥ ११८

यस्याऽवतारचरितानि विरिञ्चिलोके
गायन्ति नारदमुखाभवपद्मजाद्याः ।
आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा
वागीश्वरी च तमहं शरणं प्रपद्ये ॥ ११९

जातिभ्रष्टोऽतिपापी परधनपरदारेषु नित्योद्यतो वा
स्तेयी ब्रह्मघ्नमातापितृवधनिरतो योगिबृन्दापकारी ।
ध्येयं कर्णामृतं यः पठति हि सततं रामचन्द्रस्य भक्तो
योगीन्द्रैरप्यलभ्यं पदमपि लभते सर्वदेवैश्च सेव्यम ॥ १२०

श्रीरामकर्णामृते

तृतीयाश्वासः

समाप्तः

श्रीरामचन्द्रपरब्रह्मणे नमः.

# ॥ श्रीरामकर्णामृतम् ॥



## ॥ चतुर्थाश्वासः ॥

श्रीरामं जनकात्मजाकुचतटीश्रीगन्धसंगोल्लस-
द्वक्षोवीथि मुदार माश्रितमुनिप्रादुर्भवत्कल्पकम् ।
ब्रह्मेशानमुखामरस्तुत मजं ब्रह्माण्डभाण्डाधिपं
वन्दे कोसलकन्यकासुत महं वाराशिगर्वापहम् ॥ १

साकेते मणिनिर्मिते प्रविलसत्सौधायुतानां शते
अन्तर्गेह मतीतभानुनिलये चञ्चत्पताकोज्ज्वले ।
हर्म्ये भर्ममये घनाघनरवैर्घण्टाशतै रावृते
डोलाकल्पविहारिणं रघुपतिं सीतासमेतं भजे ॥ २

साकेते सौधबद्धध्वजशतमहिते राजमार्गे विशाले
घण्टारावैरुपेते कनककुथयुते गन्धनागे वसन्तम् ।
दिव्याकल्पोज्ज्वलाङ्गं रथगजतुरगैरावृतं सुप्रसन्नं
रामं श्वेतातपत्रावृतमुखकमलं चिन्तयाम्यन्तरङ्गे ॥ ३

साकेते मणिकोटिभिस्सुखचिते दिव्याम्बरालंकृते
हेमस्तम्भसहस्रकोटिघटिते तारापथात्युन्नते ।
रम्यस्वर्णमये विचित्रभवने भुव्यन्तरिक्षे मुदा
रामं स्मेरमुखाम्बुजं रघुपतिं सीतासमेतं भजे ॥ ४

साकेते मणितोरणाञ्चितलसद्वीथीशतप्राङ्गणे
सानन्दं भरतादिभिस्सहचैररत्यन्तमोदाकरैः ।
क्रीडन्तं मणिकन्दुकैः करगतै रन्योन्य मत्युज्ज्वलैः
पौरस्त्रीनयनोत्सवैः प्रतिदिनं पूज्यं भजे राघवम् ॥ ५

साकेते कनकाद्रिश्रृङ्गघटिते कल्पद्रुमैरावृते
वैदूर्यादिमणीन्द्रकान्तिघटिते देवेन्द्रनीलोज्ज्वले ।
कुर्वन्तं मणिनायकौ मणिगृहे माणिक्यपीठे भजे
पुत्रौ मन्मथसुन्दरौ कुशलवौ संसेव्यपादाविमौ ॥ ६

साकेते जननीकरार्चितलसत्कस्तूरिकासुन्दरे
फाले मौक्तिकजालकं शशिनिभं स्वर्णाङ्कितं वर्तुलम् ।
चूडालम्बमनोज्ञहारकलितं बिभ्राणमत्युज्ज्वलं
रामं कोसलपुत्रिकावरसुतं सीतासमेतं भजे ॥ ७

साकेते सरयूजलेऽतिविमले प्रोत्फुल्लपद्मांकिते
दिव्यस्त्रीशतकोटिनृत्यरुचिरे स्वर्गापगासुन्दरे ।
पश्यन्तीषु सुराङ्गनासु शपथं क्रीडन्तमुर्वीसुतां
बाहुभ्यां विमलोदकेन रुचिरं सीतासमेतं भजे ॥ ८

कदा सुरतरुस्थले कनकमण्टपे पुष्पके
वरासनमुपेयुषं वसुदळारविन्दोज्ज्वले ।
करेण हृदयस्पृशा कलितमुद्रचिन्मुद्रिका
मम स्फुरतु वासना मनसि बद्धवीरासना ॥ ९

नदीरमणबन्धनं मतिमतामुदारं धनं
जगद्धततरं धनं सकलकामनिष्यन्दनम् ।

विलिप्तहरिचन्दनं विनुतयातसंक्रन्दनं
भजामि रघुनन्दनं पवननन्दनस्यन्दनम् ॥ १०
रक्ताम्भोरुहलोचनं कुवलयश्यामं कपोलं धनुः
कोटिन्यस्तकराम्बुजं धृततनुत्राणं जटामण्डितम् ।
जेतारं खरदूषणत्रिशिरसामाबद्धगोधाङ्गुळी
त्राणं मार्गणपूर्णतूणयुगळं कोदण्डरामं भजे ॥ ११
श्रीमत्कल्पद्रुमूले सकलमणिमये मण्डपे पुष्पकाख्ये
तन्मध्ये सूर्यबिम्बद्युतिसरसिरुहे शोभमानाष्टपद्मे ।
पश्यन्निष्टाङ्गदीप्त्या जनकतनयया वामभागोपसेव्यः
सौमित्रिं भानुपुत्रं पवनसुतयुतं पातु मां रामचन्द्रः ॥ १२
विनीळजलदोपमं विमलचन्द्रबिम्बाननं
विनिद्रमणिकुण्डलं विकचपुण्डरीकेक्षणम् ।
विभिन्नदनुजाधिपं विधृतबाणबाणासनं
विभीषणवरप्रदं विजयराममीडेऽनिशम् ॥ १३
राजद्राजीवनेत्रं रघुकुलतिलकं रञ्जिताशेषलोकं
वामाङ्कारूढसीतं वरशरधनुषं कुण्डलोद्दीप्तगण्डम् ।
श्यामं शान्तं प्रसन्नं दरहसितमुखं वज्रसिंहासनस्थं
रामं राजत्किरीटं रविशतविशदं राजराजेशमीडे ॥ १४
भद्रव्याख्यानमुद्रां करसरसिरुहे दक्षिणे धारयन्तं
सव्ये जानुन्युदारं करमपि च मुदा धारयन्तं स्फुरन्तम् ।
पश्यन्तं वामभागे करधृतकमलां चित्रभूषाविशेषां
वदेहीं काञ्चनाढ्यां स्तनभरनमितां भावये रामचन्द्रम् ॥ १५

विबुधविटपिमूले जानकीलक्ष्मणाभ्यां
सहित मनिलवेगं बाणमादाय चापम् ।
बहुशरपटुतूणं रम्यपुष्पोपहारं
विबुधभरणचित्तं चिन्तये रामचन्द्रम् ॥ १६
जानाति राम! तव तत्त्वगतिं हनूमान्
जानाति राम! तव सख्यगतिं कपीशः ।
जानाति राम! तव युद्धगतिं दशास्यो
जानाति राम! धनदानुज एव सत्यम् ॥
हेराम! हेरमण! हेजगदेकवीर!
हेनाथ! हेरघुपते! करुणालवाल! ।
हेजानकीरमण! हेजगदेकबन्धो!
मां पाहि दीन मनिशं कृपणं कृतघ्नम् ॥ १८
अयोध्यानाथ! राजेन्द्र! सीताकान्त! जगत्पते! ।
श्रीराम! पुण्डरीकाक्ष! रामचन्द्र! नमोऽस्तु ते ॥ १९
दक्षिणे लक्ष्मणो धन्वी वामतो जानकी शुभा ।
पुरतो मारुतिर्यस्य तं नमामि रघूत्तमम् ॥ २०
रामं राक्षसमर्दनं रघुपतिं शक्रारिविध्वंसिनं
सुग्रीवेप्सितराज्यदं सुरपतेः पुत्रान्तकं शार्ङ्गिणम् ।
भक्तानामभयप्रदं भयहरं पापौघविध्वंसिनं
सीतासेवितपादपद्मयुगळं रामं भजे श्यामलम् ॥ २१
भवभयहरमेकं भानुकोटिप्रकाशं
करधृतशरचापं कालमेघावभासम् ।

कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं
कमलविशदनेत्रं सानुजं राममीडे ॥ २२
रामं श्यामपयोदनीलममलं राजीवनेत्रं सदा
ऽहल्याशापनिवारणप्रणयपादाम्भोजमुर्वीश्वरम् ।
विद्युत्कोटिसहस्रदीधितिलसत्कोटीरमस्तोज्ज्वलं
ध्याये तारकराममीश्वरसखं दैतेयवंशापहम् ॥ २३
दशरथसुत मीशं दण्डकारण्यवासं
शतमखमणिनीलं जानकीप्राणलोलम् ।
सकलभुवनमोहं सन्नुताम्भोददेहं
बहुळनुतसमुद्रं भावये रामभद्रम् ॥ २४
सरयूतीरवने लतानिवसने सद्रत्नवेदीतटे
सुमपर्यङ्कतले विदेहसुतया सार्धं परिक्रीडते ।
कस्तूरीघनसारचन्दनमिळद्गन्धोल्लसत्पावनी
पायान्मूर्तिरनामया रघुपतेर्भद्रात्मका नोऽनिशम् ॥ २५
वैदेहीप्रियवल्लभं विजयिनं वातात्मजाधीश्वरं
वाणीवारिधिवानरादिविनुतं वन्दारुमन्दारकम् ।
विश्वामित्रवसिष्ठवासवशिवावाणीशशश्वन्नुतं
देवेशं विनतात्मजाभिविनुतं वन्दे सदा राघवम् ॥ २६
विशालनेत्रं परिपूर्णगात्रं सीताकळत्रं सुरवैरिजैत्रम् ।
जगत्पवित्रं परमात्मतत्त्वं श्रीरामचन्द्रं प्रणमामि चित्ते ॥ २७
सौमित्रमानार्णवपूर्णचन्द्र ! सीतालसल्लोचनपूर्णचन्द्र ! ।
सुरारिवक्त्राम्बुजपूर्णचन्द्र ! संरक्ष मां राघव ! रामचन्द्र ! ॥ २८

यस्य किञ्चिदपि नो हरणीयं कर्म किञ्चिदपि नो चरणीयम् ।
रामनाम च सदा स्मरणीयं लीलया भवजलं तरणीयम् ॥ २९

रङ्गमाणमभितो गृहाङ्गणे भृङ्गनीलमलकावृताननम् ।
मङ्गळप्रदममङ्गळापहं संगृणे दशरथात्मजं हृदि ॥ ३०

दनुजतिमिरभानुं तापसैश्चिन्त्यमानं
शमितकलुषवारं सेवके दुष्टदूरम् ।
दळितविषमतालं दण्डितारातिजालं
प्रणुतशिखरिशत्रुं भव्यपाथोदगात्रम् ॥ ३१

हेगोपालक! हेदयाजलनिधे! हेसद्गुणाम्भोनिधे!
हेदैत्यान्तक! हेविभीषणदयापारीण! हेभूपते! ।
हेवैदेहसुतामनोजविहृते! हेकोटिमाराकृते!
हेनव्याम्बुजनेत्र! पालय परं जानामि न त्वां विना ॥ ३२

साकेते प्रणवाब्जरत्नखचिते सिंहासने संस्थितं
विश्वामित्रवसिष्ठगालवमुखैराशीर्भिरञ्चज्जटैः ।
पूज्यं पार्श्वगताब्जचारुनयनं विद्युच्चलच्चामरं
वन्दे कोमलसंस्मिताननमिळारक्षावतीर्णं हरिम् ॥ ३३

नित्यं निर्जितपङ्कसंभवमहानेत्रश्रियं राघवं
रामं पार्वणचन्द्रचारुवदनं दिक्पालकैस्सेवितम् ।
कर्पूरागरुचन्दनार्द्रहृदयं मन्दारमालांकितं
विद्युत्पुञ्जनिभाम्बराधृततनुं रामं भजे श्यामलम् ॥ ३४

श्रीरामः कुशिकात्मजस्य वचनेनाऽऽकृष्य बाणासनं
मारीचं च सुबाहुकं शरयुगेनैवाहवे लीलया ।

क्रामन् सुन्दरकाकपक्षरुचिरस्सौमित्रिणा संस्तुतः
पायान्नः कमलाननस्सकरुणः कालाम्बुदश्यामलः ॥ ३५
आनन्दरूपं वरदं प्रसन्नं सिंहेक्षणं सेवकपारिजातम् ।
नीलोत्पलाङ्गं भुवनैकमित्रं रामं भजे राघवरामचन्द्रम् ॥ ३६
युद्धेऽवसन्नघृणदद्भुतबाणवर्षं रामः प्रहारसमये रजनीचराणाम् ।
रक्षानुकूलसमयाय विभीषणाय लङ्काधिपत्यमदिशद्रघुरामचन्द्रः ॥
वेदान्तनाथं स्वकृतैकदानं हताभिमानं त्रिदशप्रधानम् ।
गजेन्द्रयानं विगतावसानं श्रीरामचन्द्रं सततं नमामि ॥ ३८
श्रीरामचन्द्रं धृतचापसायकं नीलोत्पलाभं नलिनायतेक्षणम् ।
सौमित्रिणा सेवितपादपङ्कजं सीतासमेतं शरणं भजेऽनिशम् ॥ ३९
श्रीरामचन्द्र! करुणाकर! दीनबन्धो! सीतासमेत! भरताग्रज! राघवेश!
पापार्तिभञ्जन भयातुरदीनबन्धो पापाम्बुधौ पतितमुद्धर मा मनाथम् ॥
इदं शरीरं श्लथसन्धिजर्झरं पतत्यवश्यं परिणामपेशलम् ।
किमौषधं पृच्छसि मूढ! दुर्मते! निरामयं रामकथामृतं पिब ॥ ४१
दशमुखगजसिंहं दैत्यगर्वातिरंहं
कदनभयदहस्तं तारकब्रह्म शस्तम् ।
मणिखचितकिरीटं मञ्जुलालापवाटं
दशरथकुलचन्द्रं रामचन्द्रं भजेऽहम् ॥ ४२
लङ्काविरामं रणरङ्गभीमं राजीवनेत्रं रघुवंशमित्रम् ।
कारुण्यमूर्तिं करुणाप्रपूर्तिं श्रीरामचन्द्रं शरणं प्रपद्ये ॥ ४३
रामचन्द्रमनिशं हृदयस्थं राममिन्दुवदनं प्रविभासम् ।
भावयामि निगमान्तनिवासं भारतीपतिनुतं भववन्द्यम् ॥ ४४

कौमारो रामचन्द्रः कमलमृदुपदा शोभयन् भूमिभागं
मातु श्चानन्दकारी मरकतनिकराकार इन्दीवराक्षः ।
उत्सङ्गे सन्निविष्टः पितुरमरवरैः स्तूयमानोपकारो
नानालङ्कारभूषस्स्फुरतु मम सदा मायया राम ईशः ॥ ४५

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छन्ममाग्रतो नित्यं रामः पातु सलक्ष्मणः ॥ ४६

सुग्रीवमित्रं परमं पवित्रं सीताकळत्रं नवहेमसूत्रम् ।
कारुण्यपात्रं शतपत्रनेत्रं श्रीरामचन्द्रं शिरसा नमामि ॥ ४७

श्रीराघवेति रमणेति रघूद्वहेति रामेति रावणहरेति रमाधवेति ।
साकेतनाथसुमुखेति च सुव्रतेति वाणी सदा वदतु राम! हरे! हरेति॥

जयतु जयतु रामो जानकीवल्लभोऽयं
जयतु जयतु राम श्चन्द्रचूडार्चिताङ्घ्रिः ।
जयतु जयतु वाणीनाथनाथः परात्मा
जयतु जयतु रामो नाथनाथः कृपाळुः ॥ ४९

वरं न याचे रघुनाथ! युष्मत्पादाब्जभक्तिस्सततं ममाऽस्तु ।
इदं प्रियं नाथ! वरं प्रयच्छ पुनःपुनस्त्वामिदमेव याचे ॥ ५०

अम्भोविरोपादरुणायमाने नाथस्य दृष्ट्वा नयने रघूणाम् ।
मरुद्गणैस्तत्क्षणमाशशङ्के मन्दाकिनीमङ्गळसूत्रभङ्गम् ॥ ५१

अम्भोधिस्मयबन्धनेन जगदानन्देन भूपुत्रिका-
स्वान्ताम्भोभवबान्धवेन नतरक्षायत्तचित्तेन मे ।
कर्णालम्बितकुण्डलेन दिविषत्त्राणोद्यमेनाश्रित-
श्रेयःकल्पनगेन मे मतिरियं रामेण संवर्धताम् ॥ ५२

आदौ रामजनिः कुमारगमनं यज्ञप्रतीपालनं
शापादुद्धरणं धनुर्विदळनं सीताङ्गनोद्वाहनम् ।
लङ्काया दहनं समुद्रतरणं सौमित्रिसम्मोहनं
रक्षस्संहरणं स्वराज्यगमनं चैतद्धि रामायणम् ॥ ५३

जन्मादौ क्रतुरक्षणं मुनिपतेस्स्थाणोर्धनुर्भञ्जनं
वैदेहीग्रहणं पितुश्च वचनाद्घोराटवीगाहनम् ।
कोदण्डग्रहणं खरादिमथनं मायामृगच्छेदनं
बद्धाब्धिक्रमणं दशास्यनिधनं चैतद्धि रामायणम् ॥ ५४

पूर्वं रामतपोवनानुगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
वालेर्निग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णवधनं चैतद्धि रामायणम् ॥ ५५

शान्तं शारदचन्द्रकोटिसदृशं चन्द्राभिरामाननं
चन्द्रार्काग्निविकासिकुण्डलधरं चन्द्रावतंसस्तुतम् ।
वीणापुस्तकसाक्षसूत्रविलसद्व्याख्यानमुद्राकरं
देवेशं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ५६

कृष्टं भीमधनुः कठोरनिनदं ब्रह्मादिसंविस्मयं
भास्वद्वाजिगतेरमार्गमनिशं शम्भो शिरःकम्पनम् ।
दिग्दन्तिस्खलनं कुलाद्रिचलनं सप्तार्णवोन्मीलनं
वैदेहीमदनं मदान्धदमनं त्रैलोक्यसम्मोहनम् ॥ ५७

कञ्जातपत्रायतलोचनाय कर्णावतंसोज्ज्वलकुण्डलाय ।
कारुण्यपात्राय सुवंशजाय नमोऽस्तु रामाय सलक्ष्मणाय ॥ ५८

विद्युन्निभाम्भोदसुविग्रहाय विद्याधरै स्संस्तुतसद्गुणाय ।
वीरावताराय विरोधिहन्त्रे नमोऽस्तु रामाय सलक्ष्मणाय ॥ ५९

संसक्तदिव्यायुधकार्मुकाय समुद्रगर्वापहरायुधाय ।
सुग्रीवमित्राय सुरारिहन्त्रे नमोऽस्तु रामाय सलक्ष्मणाय ॥ ६०

पीताम्बरालङ्कृतमध्यकाय पितामहेन्द्रामरवन्दिताय ।
पित्रे स्वभक्तस्य जनस्य मात्रे नमोऽस्तु रामाय सलक्ष्मणाय ॥ ६१

नमोनमस्तेऽखिलपूजिताय नमोनमश्चन्द्रनिभाननाय ।
नमोनमस्ते रघुवंशजाय नमोऽस्तु रामाय सलक्ष्मणाय ॥ ६२

इमानि पञ्चरत्नानि त्रिसन्ध्यं यः पठेन्नरः ।
सर्वपापविनिर्मुक्तस्स याति परमां गतिम् ॥ ६३

श्रीरामः कल्पवृक्षो मे विराम स्सकलापदः ।
अभिरामस्त्रिलोकानां रामः क्षेमं करोतु नः ॥ ६४

हृदय! सदयचित्तं चित्तनाथं गुणाना-
मुदधि मुरुगुणाढ्यं निम्नगालङ्कृताङ्घ्रिम ।
जनकपतितनूजास्वान्तकान्तोत्पलस्य
स्फुरणकिरणचन्द्रं रामचन्द्रं भजस्व ॥ ६५

वदतु वदतु वाणी रामरामेति नित्यं
जपतु जपतु चित्तं रामपादारविन्दम् ।
नमतु नमतु देहं सन्ततं रामचन्द्रं
न भवतु मम पापं जन्मजन्मान्तरेषु ॥ ६६

चापबाणधर स्सीताकामदः कान्तिमा न्नरः ।
सीतालक्ष्मणसंयुक्तः पातु मां राघवेश्वरः ॥ ६७

प्रातस्स्मरामि रघुनाथमुखारविन्दं
मन्दस्मितं मधुरभाषि विशालफालम् ।
कर्णावलम्बिचलकुण्डलगण्डभागं
कर्णान्तदीर्घनयनं नयनाभिरामम् ॥ ६८

प्रात र्भजामि रघुनाथकरारविन्दं रक्षोगणाय भयदं वरदं निजेभ्यः ।
यद्राजसंसदि विभिद्य महेशचापं सीताकरग्रहणमङ्गळमाप सद्यः ॥
प्रात र्नमामि रघुनाथपदारविन्दं पद्माङ्कुशादिशुभरेखशुभावहं च ।
योगीन्द्रमानसमधुव्रतसेव्यमानं शापापहं सपदि गौतमधर्मपत्न्याः ॥
प्रात र्वदामि वचसा रघुनाथनाम वाग्दोषहारि सकलं कलुषं निहन्तृ ।
य त्पार्वती स्वपतिना सह भोक्तुकामा प्रीत्या सहस्रहरिनामसमं जजाप ॥

प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं
नीलांबुदोत्पलसितेतररत्ननीलाम् ।
आमुक्तमौक्तिकविशेषविभूषणाढ्यां
ध्येयां समस्तमुनिभि र्निजभृत्यमुख्यैः ॥ ७२

यः श्लोकपञ्चक मिदं नियतः पठेत
नित्यं प्रभातसमये पुरुषः प्रबुद्धः ।
श्रीरामकिङ्करजनेषु स एव मुख्यो
भूत्वा प्रयाति हरिलोक मनन्यलभ्यम ॥ ७३

किं मंत्रै र्बहुभिश्च दुष्करफलै रायासदै स्तद्विदां
किञ्चिल्लोपविधानमात्रविफलैः संसारदुःखावहैः ।
एक स्सन्नपि सर्वमन्त्रफलदो दोषोज्झित स्सर्वदा
श्रीराम श्शरणं ममेति परमो मन्त्रोऽय मष्टाक्षरः ॥ ७४

रामभद्राश्रय स्साक्षा द्रामचन्द्रो न संशयः ।
तत्र कोदण्डतूणीरा वत्र दण्डकमण्डलू ॥ ७५
रघुनाथ! पदारविन्दयो स्ते भ्रमरीभूत मघांधकारसूर्य! ।
अपराधशतालयङ्कलौ मा मनुगृह्णासि हि मङ्गलैः कटाक्षैः ॥ ७६
राम! राम! तव नाम जपन्तः पामरा अपि तरंति भवाब्धिम् ।
अङ्गसङ्गिभवदङ्गुळिमुद्रः किं विचित्र मतरत्कपि रब्धिम् ॥ ७७
श्रीरामनामामृतमन्त्रबीजं संजीवनं चेन्मनसि प्रतिष्ठम् ।
हालाहलं वा प्रळयानलं वा मृत्यो र्मुखं वा वितथीकरोति ॥ ७८
हा कृष्णाच्युत! हा कृपालय! हरे! हा पाण्डवानां सखे!
कासि कासि सुयोधनाद्यपगतां हा रक्ष मां द्रौपदीम ।
इत्युक्तोऽक्षयवस्त्ररक्षणतनु र्योऽरक्षदाशु क्षणे
आर्तत्राणपरायण स्स भगवान्नारायणो मे गतिः ॥ ७९
इंदीवरदळश्याम मिंदुकोटिनिभाननम् ।
कंदर्पकोटिलावण्यं वंदेऽहं रघुनंदनम ॥ ८०
किं योगशास्त्रैः किमशेषविद्यया किं यागगङ्गादिविशेषतीर्थैः ।
किं ब्रह्मचर्याश्रमसञ्चरेण भक्ति र्नचे त्ते रघुवंशकीर्त्याम् ॥ ८१
हे रामभद्राश्रय! हे कृपाळो! हे भक्तलोकैकशरण्यमूर्ते! ।
पुनीहि मां त्वच्चरणारविन्दं जगत्पवित्रं शरणं ममाऽस्तु ॥ ८२
श्रीरामभद्रे श्रितयोगिचन्द्रे प्रसन्नमूर्तौ परिदृश्यमाने ।
तापत्रयं नाश मुपैति पुंसां ममांऽधकारं विनिहन्तु सद्यः ॥ ८३
नीलाभ्रदेह! निखिलेश! जगन्निवास! राजीवनेत्र! रमणीयगुणाभिराम!
श्रीदाम! दैत्यकुलमर्दन! रामचन्द्र! त्वत्पादपद्म मनिशं कलयामि चित्ते॥

कुवलयदळनीलः पीतवासाः स्मितास्यो
विविधरुचिरभूषाभूषितो दिव्यमूर्तिः ।
दशरथकुलनाथो जानकीप्राणनाथो
निवसतु मम चित्ते सर्वदा रामचन्द्रः ॥ ८५
सजलजलदनीलं सन्मुनिस्तुत्यलीलं
सुगमनिगममूलं यातुधानान्तकालम् ।
दशरथनृपबालं सत्कृपापूर्णलोलं
भजतु भुवनखेलं भक्तसंस्तुत्यशीलम् ॥ ८६
दशरथवरपुत्रं जानकीसत्कळत्रं दशमुखहरदक्षं पद्मपत्रायताक्षम् ।
करधृतशरचापं चारुमुक्ताकलापं रघुकुलनृवरेण्यं राम मीडे शरण्यम्॥
रामं वीरासनस्थं विमलरविनिभं भासमानस्वरूपं
श्यामं सीतासमेतं स्मितरुचिरमुखं कुण्डलोद्दीप्तगण्डम् ।
श्रीवत्सं श्रीनिवासं सुरविटपितटन्यस्तसिंहासनस्थं
दिव्याकल्पोज्ज्वलाङ्गं दिविजपतिनुतं ध्यानयज्ञेन यक्ष्ये ॥ ८८
श्रीरामभद्राश्रितसद्गुरूणां पादारविन्दं भजतां नराणाम् ।
आरोग्य मैश्वर्य मनन्तकीर्ति रन्ते च विष्णोः पद मस्ति सत्यम् ॥
रणहतदनुजेन्द्रो राजराजात्मचन्द्र-
स्समदरिपुमृगेन्द्र स्सन्मनोम्भोधिचन्द्रः ।
ललितघननरेन्द्रो लक्ष्मणानन्दसान्द्रो
महितसुजनचन्द्रो मैथिलीप्राणचन्द्रः ॥ ९०
नमः कोदण्डहस्ताय सन्दीपितशराय च ।
दण्डिताखिलदैत्याय रामायाऽऽपन्निवारिणे ॥ ९१

न जानन् जानकीजानिं रामं तत्त्व मपि प्रभुम् ।
धिक्कुर्या द्यमदूतान् यो नर स्त त्तत्त्वमीहते ॥ ९२
रामो मे हृदि सन्निधिं रचयतां रामं भजे दुष्कृतं
रामेणाऽपहृतं नमो भगवते रामाय रामाच्छुभम् ।
लक्षे श्रीरघुनन्दनस्य सुकृते दासोऽस्म्यहं सर्वदा
नित्यं कोसलकन्यकाप्रियसुते रामे मनो वर्तताम् ॥ ९३
कोदण्डनिर्मुक्तशराग्रखण्डनं प्रचण्डशश्वद्भुजदण्डहिण्डनम् ।
अखण्डचण्डांशुसमानभण्डनं भजामि रामं रणरङ्गमण्डनम् ॥ ९४
सिंहासनस्थं मुनिसिद्धसेव्यं रक्तोत्पलालङ्कृतपादपद्मम् ।
सीतासमेतं शशिसूर्यनेत्रं रामं भजे राघवरामचन्द्रम् ॥ ९५
दयारूपे भूपे रघुकुलकलापे सुहृदये
भुजास्तम्भे दम्भेतरविजयगुम्भे विहरताम् ।
महावीरे धीरे दशरथकुमारे परिसर-
द्गुणारामे रामे दशमुखविरामे मम मनः ॥ ९६
गतेष्वनेकेषु भवेषु पापव्रतेष्वपूर्णेषु च योगतीर्थैः ।
वित्रस्तसर्वाघनृणां कुलेशे न जायते भक्ति रनन्त मीडे ॥ ९७
श्रीरामभद्राश्रितयोगिवर्यपादाब्जयुग्मं सततं भजेऽहम् ।
यच्चक्षुषीधामघनप्रवेशे तच्चक्षुषी पश्यति यस्य चेतः ॥ ९८
न ग्रस्त स्तमसा न चाह्नि मलिनो दर्शेन नो कर्शितो
नैवास्तं गतवान् न चाङ्किततनु र्नो पाक्षिकश्रीरपि ।
लोकालोकनगेन्द्रलङ्घनविधौ नो पङ्गुभावङ्गतो
निर्दोषो गुणसागराद्रघुपते स्तेजोयशश्चन्द्रमाः ॥ ९९

नागानामयुतं तुरङ्गनियुतं सार्धं रथानां शतं
पादाताऽशतकोटि युद्धदलिता नृत्यत्कबन्धे रणे ।
एवं कोटिसहस्रनर्तनविधौ चञ्चच्छलद्घण्टिका
यामार्धं परमात्मनो रघुपतेः कोदण्डघण्टारवः ॥ १००
भजेऽहं सदा राम मिंदीवराभं भवारण्यदावानलाभाभिधेयम् ।
भवानीहृदा भावितानंदरूपं भवाभावहेतुं भवानीप्रसन्नम् ॥ १०१
सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् ।
परेशं परानन्दरूपं वरेण्यं हरिं राम मीशं भजे भारनाशम् ॥
प्रसन्नाखिलानन्ददोहप्रसन्नं प्रपन्नार्तिनिश्शेषनाशाभिधानम् ।
तपोयोगयोगीशभावाभिभाव्यं कपीशादिमित्रं भजे रामचन्द्रम ॥
स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम् ।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं दुरासाद्यपादं भजे रामचन्द्रम् ॥
सुराधीशनीलाभनीलाङ्गकांतिं विराधादिरक्षोगणानीकनाशम् ।
किरीटादिशोभं पुरारातिलाभं भजे रामचन्द्रं रघूणा मधीन्द्रम् ॥
लसच्चन्द्रकोटीप्रकाशादिपीठे समासीन मङ्के समाधाय सीताम् ।
स्फुरद्धेमवर्णोल्लसत्कंजपुंजं भजे रामचन्द्रं निवृत्त्यादितन्त्रम् ॥ १०६
सदा भोगभाजां सुदूरे विभातं मुदा योगभाजा मदूरे विभातम् ।
चिदानंदकन्दं सदा राघवेशं विदेहात्मजानन्दकन्दं प्रपद्ये ॥ १०७
महायोगमायाविशेषानुयुक्तो विभासीशलीलानराकारवृत्तिः ।
त्वदानन्दलीलाकथापूर्णकर्णाः स्सदानन्दरूपा भवन्तीह लोके ॥
यस्य प्राणनिवारणावनकृते स्यातां निदाने विभो-
रैन्द्रध्वांक्षपतेः कृपाजलनिधेः कोपप्रसादौ मुदे ।

भूया द्वासवनीलसन्निभतनुर्वामाङ्कसीदद्वधूः
सोऽयं दुष्टनिशाटपाटनपटु श्श्रीराघवो वस्सदा ॥ १०९

दुष्टो वा कलुषात्मकोऽपि पिशुनो दुर्मार्गसञ्चारवान्
मातृघ्नोऽपि पितृघ्नवर्तनरत स्सन्मौनिनिन्दापरः ।
योऽदः श्रुत्यमृतं हितं मधुरसं वक्ता च श्रोता लिखन्
स प्राप्नोति निरन्तरैहिकसुखं निर्वाणसौख्यं ततः ॥ ११०

रघुकुलवरनाथो जानकीप्राणनाथः
पितृवचनविधाता कीशराज्यप्रदाता ।
प्रतिनिशिचरनाशः प्राप्तराज्यप्रवेशो
विहितभुवनरक्षः पातु पद्मायताक्षः ॥

श्रीरामकर्णामृते
चतुर्थाश्वासः
समाप्तः

Printed by V. Ramaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.

| | | | |
|---|---|---|---|
| दशकुमारचरितम्—दण्डिविरचितम् सव्याख्यम् | ... | १ | ८ |
| ,, पूर्वपीठिका सांग्लानुवादप्रतिपदार्थम् | ... | १ | ८ |
| भोजचरित्रम् | ... | ० | ८ |
| भाषामञ्जरी | ... | ० | ४ |
| विक्रमार्कचरित्रम् | ... | ० | १० |
| षेक्स्पियर् नाटक कथावळी | ... | १ | ८ |
| मन्दारवती के. कृष्णमाचार्यविरचिता | ... | ० | १२ |

## ॥ नाटकग्रन्थाः ॥

| | | | |
|---|---|---|---|
| महाकविबोधायनकृतभगवदज्जुकनाटकम्—पीठिकासहितम् | | ० | ६ |
| मृच्छकटिका—शतावधानं श्रीनिवासाचार्यविरचितया व्याख्यया सहिता सांग्लानुवादा च | ... | ३ | ० |
| ,, आंग्लानुवादरहिता | ... | २ | ० |
| पार्वतीपरिणयः—स्थूलाक्षरैर्मुद्रितः बाणभट्टकृतः सव्याख्यानांग्लानुवादः | | १ | १२ |
| अभिज्ञानशाकुन्तलनाटकम्—शतावधानम् श्रीनिवासाचार्यविरचितया सभूमिकया व्याख्यया आङ्ग्लानुवादसहितया संस्कृतपदानुवादपूर्वाङ्ग्लटिप्पण्या च समेतम् | ... | ३ | ८ |
| मालविकाग्निमित्रम्—चेन्नपुरीयलायलाकलाशालोपन्यासकैः-ए.एस्. कृष्णाराव् महोदयैः (एम्.ए.) विरचिताभिः-आंग्लानुवादप्रतिपदांग्लार्थांग्लभूमिकाभिः सहितम् | | २ | ० |
| नागानन्दः | ... | १ | ० |
| ,, बि. ए., बि. एल्., टि. एस्. नारायणशास्त्रिविरचिताभ्यामांग्लानुवादांग्लप्रतिपदार्थाभ्यां सहितः | ... | १ | १२ |

| | | | |
|---|---|---|---|
| दशकुमारचरितम्—दण्डिविरचितम् सव्याख्यम् | ... | १ | ८ |
| ,, पूर्वपीठिका सांग्लानुवादप्रतिपदार्थम् | ... | १ | ८ |
| भोजचरित्रम् | ... | ० | ८ |
| भाषामञ्जरी | ... | ० | ४ |
| विक्रमार्कचरित्रम् | ... | ० | १० |
| षेक्स्पियर् नाटक कथावळी | ... | १ | ८ |
| मन्दारवती के. कृष्णमाचार्यविराचिता | ... | ० | १२ |

॥ नाटकग्रन्थाः ॥

| | | | |
|---|---|---|---|
| महाकविबोधायनकृतभगवदज्जुकनाटकम्—पीठिकासहितम् | | ० | ६ |
| मृच्छकटिका—शतावधानं श्रीनिवासाचार्यविरचितया व्याख्यया सहिता सांग्लानुवादा च | ... | ३ | ० |
| ,, आंग्लानुवादरहिता | ... | २ | ० |
| पार्वतीपरिणयः—स्थूलाक्षरैर्मुद्रितः बाणभट्टकृतः सव्याख्यानांग्लानुवादः | | १ | १२ |
| अभिज्ञानशाकुन्तलनाटकम्—शतावधानम् श्रीनिवासाचार्यविरचितया सभूमिकया व्याख्यया आङ्ग्लानुवादसहितया संस्कृतपदानुवादपूर्वाङ्ग्लटिप्पण्या च समेतम् | ... | ३ | ८ |
| मालविकाग्निमित्रम्—चेन्नपुरीयलायलाकलाशालोपन्यासकैः-ए.एस्. कृष्णाराव् महोदयैः (एम्.ए.) विराचिताभिः-आंग्लानुवादप्रतिपदांग्लार्थांग्लभूमिकाभिः सहितम् | | २ | ० |
| नागानन्दः | ... | १ | ० |
| ,, बि. ए., बि. एल्., टि. एस्. नारायणशास्त्रिविरचिताभ्यामांग्लानुवादांग्लप्रतिपदार्थाभ्यां सहितः | ... | १ | १२ |